

# चतुर्वेद-विषय-सूची

[श्रीमद्भगवत्पाद-स्वामिदयानन्दसरस्वती-संकलिता]



सम्पादकः—युधिष्ठिरो मीमांसकः

# सम्पादकीयम्

भगवत्पादस्वामिदयानन्दसरस्वतीमहाभागा यदाऽस्यां भारतभूमौ जनिं लेभिरे, तदानीमेतस्मिन् देशे बहुविधानि नास्तिकास्तिकरूपाणि भारतीयानि वैदेशिकानि च मतानि प्रचलितानि बभूवुः। तैश्च भारतीया विविधमताश्रितेषु समाजेषु विभक्ता बभूवुः। तेन राष्ट्रस्यैक्यं प्रणणाश। ऐक्याभावे चेयं स्वर्गोपमा भारतभूमिर्वैदेशिकैः पादाक्रान्ताऽभूत्। तेन चात्र दुःखदारिद्र्यं प्रावर्धत।

भारतभुव एतादृशीं दुरवस्थामवलोक्य तत्कारणं विमृशन्तो भगवत्पादा विविधमतानां प्रादुर्भावमेवाऽस्य कारणमधिजग्मुः। विविधमतानां च प्रादुर्भावे सनातन्या वेदविद्याया अप्रचारं मुख्यं कारणं मेनिरे। यानि च मतानि वेदप्रामाण्यमधिगच्छन्ति, तेषां मूलेऽपि वेदशास्त्राणां वास्तविकस्वरूपस्याज्ञानमेव कारणमुपालभन्त। अतस्तैर्भारतभूमेः स्वतन्त्रतायै भारतीयानामुन्नत्यै एकीभावाय च वेदशास्त्राणां तदीयधर्मस्य च शुद्धस्वरूपस्य निदर्शनमावश्यकं मन्वानैस्तदर्थं बहुधा प्रयतितम्। वेदशास्त्राणां विज्ञानाय प्रचाराय च विविधाः पाठशालाः प्रारम्भि। वैदिकमतस्य शुद्धस्वरूपस्य निदर्शनायावैदिकमतानां निरासाय च व्याख्यान-शास्त्रार्थ-ग्रन्थलेखनादिभिः प्रयतितम्।

वैदिकमतस्थापनायावैदिकमतनिराकरणाय च यादृशः सुमहान् प्रयत्नः पुरा भगवत्पादशङ्कराचार्यैर्भट्टकुमारिलाचार्यैश्च विदधे, ततोऽपि गरीयान् यत्नो वैक्रमस्यैकोनविंशशताब्द्यां भगवत्पाददयानन्दसरस्वतीस्वामिभिर्विहितः। यतो हि यस्मिन् काले शङ्कराचार्यमहाभागा भट्टकुमारिलपादाश्च नास्तिकमतमुत्खिदन्तो वैदिकमतं प्रतिष्ठापयाञ्चक्रुस्तदानीं भारतभूमिः स्वतन्त्राऽऽसीत्, वेदविद्याऽपि नात्यन्तमुत्सन्नाऽभूत्। परन्तु यस्मिन् काले दयानन्दसरस्वतीमहाभागैर्वेदविद्यायाः पुनरुद्धाराय प्रयतितम्, तदानीं देशोऽयं वैदेशिकैः पारतन्त्र्ये निगडित आसीत्, वेदविद्याऽपि प्रायशो विनष्टा एवाभूत्। देशे च भारतीयमतमतान्तरैः सह पाश्चात्यमतान्यपि प्रतिष्ठितान्यासन्। एवं च देशकालयोः परिस्थितिर्दयानन्दस्वामिनां समयेऽतितरां विपरीताऽऽसीत्।

बहोः कालात् वेदशास्त्राणां पठनपाठनसम्प्रदायस्योच्छेदाद् भगवत्पादानां काले तेषां शुद्धं स्वरूपमपि तिमिराच्छन्नमिवाभूत्। वेदनाम्ना बहुविधान्यवैदिककर्माणि प्रचारमलभन्त। अस्मिन्नेव च काले पाश्चात्यविद्वद्भिरपि ईसाईयहूदीमतपक्षपातेन वेदशास्त्राणां स्वरूपस्य कलुषतायै महान् प्रयत्नो व्यधायि। एवं च वेदशास्त्राणां समुद्धारायाऽज्ञानान्धकारस्य निरासाय तच्छुद्धस्वरूपस्य निदर्शनाय च भगवत्पादैर्दयानन्द-

सरस्वतीस्वामिभिर्वेदभाष्यस्य विधानमावश्यकमिति मत्वा प्राचीनानां प्रमाणभूतानाम ऋषिमुनीनां वेदव्याख्यानसरणीमनुसृत्य तद्ग्रन्थांश्च प्रमाणीकृत्य वेदभाष्यमारब्धम्। तत्रर्ग्वेदस्य सप्तममण्डलस्यैकषष्टितमस्य सूक्तस्य द्वितीयमन्त्रपर्यन्तम्, यजुर्वेदस्य च समग्रस्य व्याख्यानं स्वायुषि पारितम्।

वेदव्याख्यानप्रणयनात् पूर्वं भगवत्पादैश्चतुरोऽपि वेदान् 'निर्मथ्य स्वीयवेद-व्याख्यानस्य सरणी निर्धारिता। तामनुरुध्यैव च संकेतात्मिका चतुर्वेद-विषय-सूची तैः प्रथमतः संकलिता। तदनु च वेदस्य स्वरूपनिदर्शनाय तद्गतानां केषाञ्चिद् विषयाणां संकेताय स्वीयवेदभाष्यस्य वैशिष्टयनिदर्शनाय च भगवत्पादाः करिष्य-माणानां चतुर्वेदभाष्याणां भूमिकाम् ऋग्वेदादिभाष्यभूमिका-नाम्ना जग्रन्थुः। एवं च यावत् कश्चिद् ऋग्वेदादिभाष्यभूमिकां न पठेत, तावत्स तदीयं वेदभाष्यं तद्वेदभाष्यसरणीं चाऽञ्जसाऽवबोद्धुं न शक्नोति।

प्रकाश्यमाणेयं चतुर्वेद-विषय-सूची भगवत्पादानां वेदविषयाणां संकेतरूपेण संकलनात्मकः प्रथमः प्रयास आसीत्। वेदभाष्यविधानकालेऽत्र निर्दिष्टेषु विषयेषु क्वचित् परिवर्तने संशोधने च कृतेऽपि शिष्टस्यर्ग्वेदस्य सामाथर्ववेदयोश्च प्रतिवर्गं प्रतिदशति प्रतिसूक्तं च कं प्रतिपाद्यविषयं ते महानुभावा अधिजग्मुरित्यस्य परिज्ञानमनया चतुर्वेद-विषय-सूच्यैव भवितुमर्हति, इति कृत्वा प्रवाहे पतितस्तत उत्तितीर्षुर्जनो यथा कुश-काशावलम्बनमेव बहु मनुते, तथैव वेदविद्यारूप-महासागराद् विद्यारत्नं प्रतिपित्सवे जनायेयं चतुर्वेद-विषय-सूची महत उपकाराय प्रभवतीति नूनं मे निश्चयः।

भगवत्पाददयानन्दसरस्वतीनामुत्तराधिकारिण्याः परोपकारिणीसभायाः संग्रहे विद्यमानापीयं चतुर्वेदविषयसूची परोपकारिणीसभाधिकारिभिः २०२८ तमे वैक्रमाब्दे प्रथमतः प्रकाशिता। प्रकाशितायामस्यां चतुर्वेदविषयसूच्यां बहुत्र मुद्रण-दोषान् पाठभ्रंशांश्चोपलभ्य १९७२तमस्य क्रैस्ताब्दस्य फरवरीमासस्य चतुर्दश-तिथ्यां मया परोपकारिणीसभायाः संग्रहे विद्यमानस्यास्या हस्तलेखस्य पुनर्निरीक्षणं कृत्वा पाठाः संशोधिताः।

यतो हि चतुर्वेदविषयसूच्यां विषयाणां संकलनं संकेतात्मकमेव विद्यत इति कृत्वा बहुत्र तत्तदंशगतानां विषयाणां परित्याग उपलभ्यते। तत्रर्ग्वेदविषयसूच्यां यस्य ययोर्येषां वा वर्गाणां विषयोऽनिर्दिष्ट आसीत्, तस्य ग्रन्थकर्तुर्भाष्यमनुरुध्य [ ] कोष्ठकेषु कथंचित् पूर्तिर्विहिता। एतस्मिन् कर्मणि मूलर्ग्वेदादपि साहाय्यं गृहीतम्। लेखकप्रमादजन्या अशुद्धयस्तु सर्वत्र परिमृष्टाः। आशासेऽनेन प्रयासेनेयं चतुर्वेदविषयसूची विदुषां कृते पूर्वमुद्रणापेक्षयाऽधिकमुपयोगिनी भविष्यति।

वसन्त-पञ्चमी सं० २०३१, — विदुषां वशंवदः—
बहालगढ़ (सोनीपत-हरयाणा) — युधिष्ठिरो मीमांसकः

॥ओ३म्॥

# चतुर्वेद-विषय-सूची

# अथ ऋग्वेदस्य विषय-सूची

## अष्टकम् १, अध्यायः १

| वर्गः[1] | विषयः | वर्गः | विषयः |
|---|---|---|---|
| १[-२][2] | अग्नि-विद्या[3] | ३[5] | वायु-विद्या |
| | मन्त्र १ प्रार्थना | ४[6] | मित्र-लक्षण[म्][7] |
| | ,, ९ प्रार्थना[4] | ६ | सरस्वती-लक्षण[म्] |

---

१. हस्तलेखे वैयमुद्रिते च 'अनुवाक' इत्यपपाठः, उत्तरत्र निर्दिष्टानामङ्कानां वर्गाङ्कत्वात् । एषाऽशुद्धिः प्रथमाष्टकस्य पञ्चमाध्यायस्य चतुर्दशवर्गपर्यन्तमुपलभ्यते, तदनन्तरं वर्गनिर्देशः एव दृश्यते ।

२. अत्रोत्तरत्र च कोष्ठे निर्दिष्टाया वर्गसंख्यायाः तद्विषयस्य च हस्तलेख उल्लेखो न दृश्यते । सम्भाव्यते विषयस्य समानत्वादुल्लेखो ग्रन्थकारेण न कृतः स्यात् । एषा शैली प्रथमाष्टकपर्यन्तमुपलभ्यते । उत्तरत्र प्रतिकर्म विषयनिर्देशो दृश्यते । अतः प्रथमाष्टकेऽपि ऋग्वेदं ग्रन्थकर्तु भाष्यं च दृष्ट्वा पाठः कोष्ठे प्रपूरितः ।

३. वैयमुद्रिते 'अग्निविद्या-प्रार्थनामन्त्र' इति परिवर्तितः पाठो दृश्यते । अस्माभिस्तु हस्तलेखानुसारी पाठो धृतः ।

४. अत्र ९ मन्त्रसंख्या सूक्तानुरोधेन ज्ञेया । वर्गानुरोधेन द्वितीयवर्गस्य चतुर्थो मन्त्रो द्रष्टव्यः ।

५. हस्तलेखे वैयमुद्रिते च '२' अपसंख्योपलभ्यते ।

६. हस्तलेखे वैयमुद्रिते च '३' अपसंख्योपलभ्यते ।

७. हस्तलेखे वैयमुद्रिते च बहुत्राविभक्त्यन्तः पाठ उपलभ्यते ।

ऋग्वेदे प्रथमाष्टके प्रथमोध्यायः ॥१॥

१५

## अष्टकम् १, अध्यायः २



---

१. हस्तलेखे वैयमुद्रिते च 'अग्नि-विद्या' इति पाठो दृश्यते । ऋतुभिः
२० सहावान्तर-विषय-निर्देशेऽपि न सर्वस्य २९ तमस्य वर्गस्य अग्निविद्याविषयः । द्रष्टव्यमत्र ग्रन्थकर्तुर्ऋग्वेदभाष्यम् । २८-२९ वर्गयोर्ऋतुदेवतायाः प्राधान्यात् तस्यैव निर्देशोऽस्माभिरकारि ।

२. ऋभूशब्दस्य मेधाविनामसु पाठात् पितृत्वं शिल्पित्वं चोभयं ज्ञेयम् ।

३. हस्तलेखे वैयमुद्रिते च 'इन्द्राग्नी-विद्या' इत्यपपाठः ।

२५ ४. हस्तलेखे वैयमुद्रिते च 'सविता विद्या' इत्यपपाठः, चतुर्थवर्गस्थ-मन्त्राणामश्विदेवतात्वात् ।

५ [-६] सवितृ-विद्यादि[:][१]
७ विष्णु-विद्या
८ होम-विद्या[२]
[९ होम-विद्या]
१०[३] वायु-विद्या
११ वृष्टि-विद्या
१२[३] जल-विद्या
१३ अग्नि-परमेश्वर-विद्या[४]
[१४ वरुण-परमेश्वर-विद्या]
१५ रात्रि-विद्या
[१६-] १९ वरुण-विद्या
[२०-२४ अग्नि-विद्या]
२५ [-२६] उलूखलालङ्कारेण गर्भाधानम्
[२७-] २९ इन्द्र-स्तुतिः
[३० इन्द्रादि-स्तुतिः]
[३१ इन्द्रादि-स्तुतिः] ५
३२ अग्नि-परमेश्वर-विद्या
३३ अग्नि-परमेश्वर-विद्या
३४ अग्नि-परमेश्वर-विद्या
३५ अग्नि-परमेश्वर-विद्या
३६ मेघ-विद्या १०
३७ मेघ-विद्या
३८ मेघ-इन्द्र-परमेश्वर-विद्या

**ऋग्वेदे प्रथमाष्टके द्वितीयोऽध्यायः ॥२॥**

## अष्टकम् १, अध्यायः ३

| वर्गः | विषयः |
|---|---|
| [१-३ | इन्द्र-परमेश्वर-शूरवीर-विद्या] |
| [४ | अश्वि-शिल्प-विद्या] |
| ५ | त्रिचक्रादिरथशिल्प-विद्या |
| ६ | सवितृ-विद्या |
| ७ | सवितृ-विद्या |
| ८ | अग्नि-विद्या |
| [९ | अग्नि-विद्या] |

१५

१. आदिपदत्वात् अग्निविद्या, देवीन्द्राण्यादिविद्या, द्यावापृथिवी-विद्या च संग्राह्या । २०

२. 'सोमपीतये' इति मन्त्रेषु निर्देशात् ।

३. वर्गसंख्यानन्तरम् 'इत्यत्र' इत्यनावश्यकः पाठः, अन्यत्रादर्शनात् ।

४. वैयमुद्रिते 'अग्नि परमेश्वरः' इत्यपपाठः । अत्र विद्यापदं हस्तलेखे त्रुटितम् । द्रष्टव्यमिहैव ३२-३५ चतुर्णां वर्गाणाम् 'अग्नि-परमेश्वर-विद्या' पाठः । २५

ऋग्वेदे प्रथमाष्टके तृतीयोऽध्यायः ॥३॥

## अष्टकम् १, अध्यायः ४



---

१. वैयमुद्रिते '१६' संख्यात्र मुद्रितोपलभ्यते । हस्तलेखोऽत्रास्पष्टः । १६ तमस्य वर्गस्य मरुद्देवताकत्वान्नात्राऽग्निविद्याविषयः संभवति । अतोऽस्माभिः
२० प्रकरणमनुरुद्ध्य '११' संख्या निर्दिष्टा ।

२. विंशतितमस्य वर्गस्य ब्रह्मणस्पति देवता । तत्र मरुतामपि निपात-देवतात्वं श्रूयते । पञ्चममन्त्रे तु 'यस्मिन्निन्द्रो ·· देवा ओकांसि चक्रिरे' इति निर्देशादाधाराधेयत्वं स्पष्टमेव ।

३. अस्मिन् वर्गे रुद्रः प्रधानदेवता । षष्ठे मन्त्रे 'यः शुक्र इव सूर्यो हिरण्य-
२५ मिव रोचते' इति निर्देशात् प्रत्यक्षं सूर्यविद्या । परमेश्वरस्तु रुद्रपदार्थत्वात् स्पष्ट एव ।

४ दशमवर्गस्य तृतीये मन्त्रे (सूक्तानुसारमष्टमे मन्त्रे)ऽयं विषयः ।

५. इन्द्र-सम्बन्धि-पदार्थविद्या ।

**ऋग्वेदे प्रथमाष्टके चतुर्थोऽध्यायः ॥४॥**

## अष्टकम् १, अध्यायः ५



**ऋग्वेदे प्रथमाष्टके पञ्चमोऽध्यायः ॥५॥**

---

१. अत्राग्निर्यमशब्देनोच्यते । द्र०—अस्यैव वर्गस्य चतुर्थो मन्त्रः ।

२. द्रष्टव्योऽस्यैव वर्गस्य तृतीयो मन्त्रः ।

३. द्रष्टव्योऽस्यैव वर्गस्य तृतीयो मन्त्र. [सूक्तानुसारमष्टमो मन्त्रः] ।

४. अस्यैव वर्गस्य षष्ठो मन्त्र [सूक्तानुसारं षोडशो मन्त्रः] ।

## अष्टकम् १, अध्यायः ६

| वर्गः | विषयः |
|---|---|
| [१-४ | इन्द्र-पदार्थ-विद्या] |
| ५ [-८ | इन्द्र-] पदार्थ-विद्या |
| ९ | वायु-पृथिवी-विद्या |
| [१०-१३ | वायु-विद्या] |
| १४[1] | विमान-रेल-विद्या |
| १५ | ईश्वर-स्तुति-प्रार्थना |
| १६ | ईश्वर-प्रार्थना |
| १७ | ईश्वर-प्रार्थना |
| १८ | ईश्वर-प्रार्थना |
| १९ | ईश्वर-प्रार्थना |
| २० | ईश्वर-प्रार्थना |
| २१ | ईश्वर-स्तुति-प्रार्थना |
| २२ | ईश्वर-स्तुति-प्रार्थना |
| २३ | ईश्वर-स्तुति-प्रार्थना |
| [२४-२७ | उषर्विद्या] |
| [२८-२९ | अग्नि-सोम-विद्या] |
| ३० | अग्नीश्वर-स्तुतिः |
| ३१ | अग्नीश्वर-स्तुतिः |
| ३२ | अग्नीश्वर-स्तुति-प्रार्थना[2] |

**ऋग्वेदे प्रथमाष्टके षष्ठोऽध्यायः ॥६॥**

## अष्टकम् १, अध्यायः ७

| वर्गः | विषयः |
|---|---|
| १ | अग्नीश्वर-स्तुति-प्रार्थना |
| २ | अग्नीश्वर-स्तुति-प्रार्थना |
| ३ | अग्नीश्वर-स्तुति-प्रार्थना |
| ४ | अग्नीश्वर-स्तुति-प्रार्थना |
| ५ | अग्नीश्वर-प्रार्थना |
| ६ | अग्नीश्वर-प्रार्थना |
| ७ | अग्नीश्वर-प्रार्थना |
| [८-११ | इन्द्र-पदार्थ-विद्या] |
| १२ [-१३] | ईश्वर-विद्या |
| १४ | [3]इन्द्रादि-पदार्थ-विद्या |

---

१. हस्तलेखे वैयमुद्रिते चात्र '९' संख्याऽशुद्धोपलभ्यते । पूर्वत्र '९' संख्याया निर्देशादत्राशुद्धिस्तु स्पष्टैव । अयं विषयनिर्देशः १४ चतुर्दशवर्गस्य संभवतीति कृत्वा तथा निर्देशः कृतः । अत्र विषयनिर्देशे रेलशब्देन रेल-इवाशुगतिमद् यानमभिप्रेतम् ।

२. वैयमुद्रिते 'अग्नीश्वर-स्तुतिः' इत्यपपाठः । अस्मत्पाठो हस्तलेखानुसारी ।

३. अस्य वर्गस्याश्विनौ देवते ।

१५ इन्द्र-विद्या
१६ धर्म-विद्या
[१७ प्रार्थना]
[१८ रथ-विद्या]
[१९ शल्य-विद्या]
२० प्रार्थना
[२१ प्रार्थना]
२२ [1]अश्वि-विद्या
[२३ [2]अश्वि-विद्या]
२४ प्रार्थना
२५ प्रार्थना-स्तुति [:]
२६ रथ-विद्या
[२७-२९ इन्द्राग्नि-विद्या] ५
[३०-३२ शिल्प-विद्या]
[३३-३७ अश्वि-विद्या]

**ऋग्वेदे प्रथमाष्टके सप्तमोऽध्यायः ॥७॥**

## अष्टकम् १, अध्यायः ८ १०

वर्गः विषयः

[१ प्रार्थना-स्तुतिः]
[२ स्तुतिः]
[३ स्तुतिः प्रार्थना]
[४ रथ-विद्या]
[५ अहोरात्र-विद्या]
[६ प्रार्थना]
७ ज्ञान-विद्या
८ शिल्प-विद्या, विमान-नौ-विद्या [च]
९ शिल्प-विद्या
[१० दम्पती]
[११ विद्वत्स्तुतिः]
१२ नौ-विद्या
[१३ अग्नि-विद्या]

वर्गः विषयः

१४ अग्न्यश्व-विद्या
१५ अग्न्यश्व-नौ[3]-विद्या
[१६ इन्द्र-रथ-विद्या]
१७ शिल्पादि[4]-विद्या १५
१८ अनेकविध-रथ-यान-विद्या
१९ शिल्प-विद्या
२० रथादि-शिल्प-विद्या
२१ तार-विद्या
[२२ शत्रुनाशनम्] २०
२३ अनश्वरथ-विद्या
२४ अनेकविध-शिल्प-विद्या
[२५ वायु-विद्या]
२६ शिल्प-विद्या

**ऋग्वेदे प्रथमाष्टके अष्टमोऽध्यायः ॥८॥** २५

---

१ अस्य वर्गस्याश्विनौ देवते ।
२. वर्गस्याश्विनौ देवते । अतो वैयमुद्रिते 'वरुण-विद्या' इत्यपपाठः ।
३ 'नौ' वैयमुद्रिते नास्ति, हस्तलेखे वर्तते ।
४. वैयमुद्रिते 'शिल्पार्य विद्या' इत्यपपाठः ।

# अथ द्वितीयाष्टकः

## अष्टकम् २, अध्यायः १

| वर्गः | विषयः | वर्गः | विषयः |
|---|---|---|---|
| १ | शिल्प-विद्या | १४ | परमेश्वर-भौतिकाग्नि-विद्या |
| २ | पृथिव्यां शिल्प-विद्या | १५ | परमेश्वर-भौतिकाग्नि-विद्या |
| ३ | रथादि-शिल्प-विद्या | १६ | इन्द्राग्नी-विद्या |
| ४ | शिल्प-विद्या | १७ | प्रार्थना-इन्द्र-विद्या |
| ५ | पदार्थ-विद्या | १८ | पदार्थ-विद्या |
| ६ | पदार्थ-विद्या | १९ | पदार्थ-विद्या |
| ७ | पदार्थ-विद्या | २० | इन्द्र-विद्या |
| ८ | गृहाश्रम-स्त्रीपुरुष-व्यवस्था | २१ | इन्द्र-विद्या |
| ९ | स्त्रीपुरुष-व्यवस्था | २२ | पदार्थेन्द्र-विद्या |
| १० | दक्षिणादान-विद्या | २३ | पदार्थ-स्तुति-विद्या |
| ११ | शिल्प-विद्या | २४ | इन्द्र-वायु-विद्या |
| १२ | परमेश्वर-भौतिकाग्नि-विद्या | २५ | वायु-विद्या |
| १३ | परमेश्वर-भौतिकाग्नि-विद्या | २६ | मित्रादि-विद्या |

**ऋग्वेदे द्वितीयाष्टके प्रथमोऽध्यायः ॥१॥**

## अष्टकम् २, अध्यायः २

| वर्गः | विषयः | वर्गः | विषयः |
|---|---|---|---|
| १ | पदार्थ-विद्या | ४ | गणितादि-विद्या |
| २ | पूष-विद्या[1] | ५ | अग्निपदार्थ-विद्या |
| ३ | इन्द्र-वायु[2]-मित्रावरुण-विद्या | ६ | अग्निपदार्थ-विद्या |

---

१. वैयमुद्रिते 'पूषा विद्या' अपपाठः ।

२. वैयमुद्रिते 'इन्द्र वायू मित्रावरुण विद्या' पाठः ।

**ऋग्वेदे द्वितीयाष्टके द्वितीयोऽध्यायः ॥२॥**

## अष्टकम् २ अध्यायः ३



१. वैयमुद्रिते 'पदार्थ विधिः' अपपाठः, अस्मत्पाठो हस्तलेखानुसारी द्रष्टव्यः । २. वैयमुद्रिते 'अग्न्यादि' इति पाठः ।

**ऋग्वेदे द्वितीयाष्टके तृतीयोऽध्यायः ॥३॥**

## अष्टकम् २ अध्यायः ४



**ऋग्वेदे द्वितीयाष्टके चतुर्थोऽध्यायः ॥४॥**

## अष्टकम् २ अध्यायः ५



---

१. वैयमुद्रिते 'पदार्थ रथ विमान विद्या' पाठः ।

५ व्यवहार-विद्या
६ प्रार्थनादि-विद्या
७ ज्ञान[म्]
८ स्तुति[:]
९ श्री-सरस्वती-यज्ञ-विद्या
१० अग्नि-स्तुति-प्रार्थना
११ स्तुति-प्रार्थना-पदार्थ-विद्या
१२ स्तुति[:]
१३ स्तुति[:]
१४ व्यवहार-विद्या
१५ सृष्टि-विद्या
१६ विष-विद्या
१७ अग्नीश्वर-नामानि स्तुति[श्] च
१८ अग्नीश्वर-नामानि स्तुति[श्] च
१९ अग्नीश्वर-नामानि स्तुति[श्] च
२० अग्नीश्वर-स्तुति[:]
२१ अग्नीश्वर-स्तुति-प्रार्थना
२२ अग्नीश्वर-स्तुति-प्रार्थना
२३ अग्नीश्वर-प्रार्थना
२४ अग्नीश्वर-स्तुति-प्रार्थना
२५ अग्नीश्वर-स्तुति[:]
२६ अग्नीश्वर-स्तुति-प्रार्थना
२७ अग्नीश्वर-स्तुति-प्रार्थना
२८ स्तुति[:]
२९ अग्नीश्वर-स्तुति-प्रार्थना

**ऋग्वेदे द्वितीयाष्टके पञ्चमोऽध्यायः ॥५॥**

## अष्टकम् २ अध्याय ६

वर्गः विषयः

१ अग्नीश्वर-स्तुति[:]
२ अग्नि-स्तुति[:]
३ पदार्थ-विद्या
४ इन्द्र-विद्या
५ इन्द्र-पदार्थ-विद्या
६ गणित-विद्यादि[:]
७ पदार्थ-विद्या-स्तुति[:]
८ पदार्थ-विद्या-स्तुति[:]
९ उत्पत्ति-स्तुति-प्रार्थना[:]
१० ऋतु-विद्या
११ पदार्थ-विद्या
१२ पदार्थ-विद्या
१३ वृष्ट्यादि-विद्या
१४ पदार्थ-विद्या
१५ इन्द्र-स्तुत्यादि[:]
१६ उत्पत्ति-विद्या
१७ स्तुति[:]
१८ स्तुति[:]
१९ ईश्वर-स्तुति-धारण-विद्या
२० इन्द्रेश्वर-स्तुति[:]
२१ गणितादि-विद्या
२२ गणितादि-विद्या[1]

---

१. वैयमुद्रिते हस्तलेखे च 'गणितादि प्रार्थना' इत्यपपाठः। द्र० अस्यैवाध्यायस्य २१ तमस्य वर्गस्य विषय.।

२३ स्तुति[:]
२४ इन्द्र-स्तुति[:]
२५ इन्द्र-स्तुति[:]
२६ स्तुति[:]
५ २७ इन्द्र-स्तुति-प्रार्थना
२८ पदार्थ-विद्या
२९ स्तुत्यादि-विद्या
३० प्रार्थना-स्तुत्यादि[:]
३१ स्तुति-प्रार्थनादि-विद्या
३२ स्तुति-प्रार्थनादि-विद्या

**ऋग्वेदे द्वितीयाष्टके षष्ठोऽध्यायः ॥६॥**

## अष्टकम् २ अध्यायः ७

| वर्गः | विषयः |
|---|---|
| १ | स्तुत्यादि-पदार्थ-विद्या |
| १० २ | ज्ञानादि-विद्या |
| ३ | ज्ञानादि-विद्या |
| ४ | स्तुत्यादि-पदार्थ-विद्या |
| ५ | स्तुत्यादि-पदार्थ-विद्या |
| ६ | स्तुत्यादि-पदार्थ-विद्या |
| १५ ७ | स्तुत्यादि-पदार्थ-विद्या |
| ८ | स्तुत्यादि-पदार्थ-विद्या |
| ९ | प्रार्थना-स्तुत्यादि-विद्या |
| १० | प्रार्थना-स्तुत्यादि-पदार्थ-[1] विद्या |
| २० ११ | प्रार्थना-स्तुत्यादि[1]-पदार्थ-विद्या |
| १२ | प्रार्थना-स्तुत्यादि-पदार्थ-विद्या |
| १३ | युद्धादि-पदार्थ-विद्या |
| १४ | विमान-यानादि-शिल्प-विद्या |
| १५ | वरुणादि-सामर्थ्य-विचार[:] |
| १६ | शिल्पादि-पदार्थ-विद्या |
| १७ | सूर्य-वाय्वादि-रसायन-विद्या |
| १८ | प्रार्थनादि[2]-वायु-विद्या |
| १९ | विमा[ना]दि विद्या |
| २० | शिल्प-विद्या |
| २१ | शिल्प-विद्या |
| २२ | जल-गुणज्ञान-विद्या |
| २३ | जल-विद्युदादि-विद्या |
| २४ | जल-विज्ञानादि-विद्या |
| २५ | सूर्यपरमेश्वरेन्द्रादि-विद्या |

**ऋग्वेदे द्वितीयाष्टके सप्तमोऽध्यायः ॥७॥**

२५ १. वैयमुद्रिते 'प्रार्थनादि' इत्यपपाठः। अस्मत्पाठो हस्तलेखानुसारी।

२. वैयमुद्रिते 'प्रार्थना' इत्येव, तत्रादिदं हस्तलेखस्थं नास्ति।

## अष्टकम् २, अध्यायः ८

| वर्गः | विषयः |
|---|---|
| १ | सोम-हविः पानादि-विद्या |
| २ | पदार्थ-विद्या |
| ३ | प्रार्थनादि-पदार्थ-विद्या |
| ४ | प्रार्थनादि-विद्या |
| ५ | प्रार्थनादि-विद्या |
| ६ | विमान-ईश्वर-प्रार्थनादि-विद्या |
| ७ | शिल्प-विद्या |
| ८ | स्तुति-पदार्थ-विद्या |
| ९ | प्रार्थनादि-पदार्थ-विद्या |
| १० | नदी-विद्या |
| ११ | प्रार्थनादि-विद्या |
| १२ | धर्मोपदेशादि-विद्या |
| १३ | ईश्वरप्रार्थनोपदेशादि-विद्या |
| १४ | ईश्वराग्न्यादि-पदार्थ-विद्या |
| १५ | प्रार्थनादि-पदार्थ-विद्या |

| नर्गः | विपयः |
|---|---|
| १६ | प्रार्थनाद्यनेक-पदार्थ-विद्या |
| १७ | ईश्वर-अग्नि-प्रार्थनादि[1]-विद्या |
| १८ | ईश्वरस्तुत्याद्यग्नि-विद्या |
| १९ | ईश्वाग्नि-स्तुत्यादि-पदार्थ-विद्या |
| २० | अग्निरनेकनामा |
| २१ | विमानाद्यनेक-विद्या |
| २२ | अग्न्यादि-पदार्थ-विद्या |
| २३ | [अग्न्यादि-पदार्थ-विद्या][2] |
| २४ | अग्निरनेकनामादि-पदार्थ-विद्या |
| २५ | स्तुति-प्रार्थनादि-विद्या |
| २६ | अग्निरीश्वरनामा |
| २७ | अग्नीश्वर-विद्या<br>प्रार्थनादि-विद्या[3] |

**ऋग्वेदे द्वितीयाष्टके अष्टमोऽध्यायः ॥८॥**

---

१. वैयमुद्रिते 'ईश्वराग्न्यादि पदार्थादि विद्या' इत्यपपाठः । अस्मत्पाठो हस्तलेखानुसारी ।

२. हस्तलेखे वर्गसंख्या तूपलभ्यते, विषयनिर्देशो न दृश्यते । पाठोऽयं वैयमुद्रिते परिवर्तितः

३. अस्मिन्नध्याये २७ वर्गा एव सन्ति । अतो वैयमुद्रिते इतः पूर्व विर्दिष्टा २८ संख्या चिन्त्या । अयं विषयः सप्तविंशतिवर्गस्यैव ११ मन्त्रस्य विज्ञेयः । यद्वा उभौ पाठौ सम्मेल्यैवं कल्पनीयः—'अग्नीश्वरप्रार्थनादि-विद्या' ।

# अथ तृतीयाष्टकः

## अष्टकम् ३ अध्यायः १

| वर्गः | विषयः |
|---|---|
| १ | वाक्प्राण-विद्या |
| २ | प्राणाग्निप्रार्थनादि-विद्या |
| ३ | ज्ञानादि-विद्या |
| ४ | प्रार्थनाद्याशी[1]-विद्या |
| ५ | पदार्थ-विद्या |
| ६ | अग्न्यादि-गणित-विद्या |
| ७ | अग्न्यादि-पदार्थ-विद्या |
| ८ | अग्नि-प्रार्थनादि-विद्या |
| ९ | अग्नि-स्तुत्यादि-पदार्थ-विद्या |
| १० | अग्नि-विद्या |
| ११ | [2]इन्द्राग्नि-विद्या |
| १२ | [2]इन्द्राग्नि-विद्या |
| १३ | अग्नि-स्तुति-प्रार्थनादि-विद्या |
| १४ | अग्नीश्वरस्तुत्यादि-विद्या |
| १५ | अग्नीश्वर-स्तुत्यादि-पदार्थ-विद्या |
| १६ | अग्नि-स्तुति-विद्या |
| १७ | अग्नि-स्तुत्यादि-विद्या |
| १८ | अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| १९ | अग्नि-स्तुति-प्रार्थनादि-विद्या |
| २० | अग्निरुषआद्यनेकनामा, प्रार्थनादि-विद्या |
| २१ | अग्नि-स्तुति-प्रार्थनादि-विद्या |
| २२ | अग्नि-स्तुत्यादि-पदार्थ-विद्या |
| २३ | अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| २४ | अग्नि-स्तुत्यादि-विद्या |
| २५ | अग्नि-स्तुत्यादि-विद्या |
| २६ | अग्निरनेकनामा, स्तुति प्रार्थनादि-विद्या |
| २७ | अग्निरनेकनामा, स्तुति-प्रार्थनादि-विद्या |
| २८ | अग्नि-स्तुतिप्रार्थनादि-विद्या |
| २९ | अग्निरनेकनामा, स्तुति-प्रार्थनादि-विद्या |
| ३० | अग्नि-स्तुत्यादि-विद्या |

---

१. एतद्ग्रन्थकर्त्रा स्ववेदभाष्येऽपि दीर्घेकारान्तः 'आशीः' शब्दः प्रयुक्तः । अत्र विशेष विचार, ऋ० १।३६।२ मन्त्रभाष्यस्य टिप्पण्यां द्रष्टव्यः (ऋग्भाष्य भाग २, पृष्ठ ३६३, टि० १) । अतो वैयमुद्रिते '०आशीर्विद्या' इति शोधनं चिन्त्यम् ।

२. वैयमुद्रिते 'इन्द्राग्नी' इत्यपपाठः ।

ऋग्वेदे तृतीयाष्टके प्रथमोऽध्यायः ॥१॥ ५

## अष्टकम् ३ अध्यायः २



ऋग्वेदे तृतीयाष्टके द्वितीयोऽध्यायः ॥२॥

## अष्टकम् ३ अध्यायः ३



१० १५ २० २५

९ यानादि-पदार्थ-विद्या
१० ईश्वर-स्तुति-विद्या
११ इन्द्रादि-स्तुति-विद्या
१२ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१३ इन्द्रन्स्तुति-पदार्थ-विद्या
१४ इन्द्र-स्तुति-पदार्थ-विद्या
१५ इन्द्र-स्तुति-पदार्थ-विद्या
१६ इन्द्र-वायु-स्तुति-प्रार्थनादि-विद्या
१७ इन्द्र-स्तुति-प्रार्थनादि-विद्या
१८ भोजन-विद्या
१९ पदार्थ-विद्या
२० पदार्थ-विद्या
२१ प्रार्थना-पदार्थ-विद्या
२२ पदार्थ-विद्या
२३ पदार्थ-विद्या
२४ गर्भादि-पदार्थ-विद्या
२५ पदार्थ-विद्या
२६ स्तुति-प्रार्थनादि-पदार्थ-विद्या
२७ पदार्थ-विद्या
२८ ज्ञानादि-पदार्थ-विद्या
२९ [1]ज्ञान-विद्या
३० ज्ञान-विद्या
३१ ज्ञान-विद्या

**ऋग्वेदे तृतीयाष्टके तृतीयोऽध्याय ॥३॥**

## अष्टकम् ३, अध्यायः ४

वर्गः विषयः

१ पदार्थ-विद्या
२ अग्नीश्वर-प्रार्थनादि पदार्थ-विद्या
३ रथविमानादि-पदार्थ-विद्या
४ शीघ्र[गामि]रथ-पदार्थ-विद्या
५ मित्रेश्वर-स्तुति-प्रार्थनादि-विद्या
६ मित्रेश्वर-धारणादि-पदार्थ-विद्या
७ इन्द्र-स्तुति-यज्ञादि-पदार्थ-विद्या
८ युद्धादि-पदार्थ-विद्या
९ बृहस्पति-स्तुति-प्रार्थनादि-पदार्थ-विद्या
१० प्रार्थना-पदार्थ-विद्या
११ सवित्रादि-प्रार्थनादि-पदार्थ-विद्या
१२ [2][अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या]
१३ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या

१ ज्ञानविषयिका विद्येत्यर्थः ।

२. हस्तलेखे १२ द्वादश संख्यामात्र दृश्यते, विषयस्योल्लेखो नास्ति । वैयमुद्रिते सम्पादकेन एकादशवर्गस्य विषय एवेहापि संयोजित । स सवितृ-देवताया अभावादयुक्तः ।

**ऋग्वेदे तृतीयाष्टके चतुर्थोऽध्यायः ॥४॥**

## अष्टकम् ३, अध्यायः ५



**ऋग्वेदे तृतीयाष्टके पञ्चमोऽध्यायः ॥५॥**

## अष्टकम् ३, अध्याय: ६

| वर्ग: | विषय: |
|---|---|
| १ | पदार्थ-विद्या |
| २ | पदार्थ-विद्या |
| ३ | युद्धार्था प्रार्थना-विद्या |
| ४ | इन्द्र-स्तुत्यादि-पदार्थ-विद्या |
| ५ | इन्द्र-प्रार्थनादि-विद्या |
| ६ | पदार्थ-विद्या |
| ७ | युद्धादि-पदार्थ-विद्या |
| ८ | इन्द्र-प्रार्थनादि-विद्या |
| ९ | सख्यत्वादि-विद्या |
| १० | ऋत-विचारादि-विद्या |
| ११ | पदार्थ-विद्या |
| १२ | पदार्थ-विद्या |
| १३ | प्रश्नोत्तर-विद्या |
| १४ | इन्द्र-स्तुत्यादि-पदार्थ-विद्या |
| १५ | ईश्वरादि-पदार्थ-व्याख्या |
| १६ | ईश्वरादि-पदार्थ-विद्या |
| १७ | पदार्थ-विद्या |
| १८ | पदार्थ-विद्या |
| १९ | पदार्थ-विद्या |
| २० | अलंकारादि-पदार्थ-विद्या |
| २१ | वृष्ट्यादि-पदार्थ-विद्या |
| २२ | स्तुत्यादि-पदार्थ-विद्या |
| २३ | पदार्थ-विद्या |
| २४ | पदार्थ-विद्या |
| २५ | प्रार्थनादि-पदार्थ-विद्या |
| २६ | इन्द्रादि-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| २७ | इन्द्र-प्रार्थनादि-विद्या |
| २८ | इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| २९ | इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ३० | इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या |

**ऋग्वेदे तृतीयाष्टके षष्ठोऽध्याय: ॥६॥**

## अष्टकम् ३, अध्याय: ७

| वर्ग: | विषय: |
|---|---|
| १ | पदार्थ-विद्या |
| २ | पदार्थ-विद्या |
| ३ | पदार्थ-विद्या |
| ४ | प्रार्थनादि-पदार्थ-विद्या |
| ५ | स्तुत्यादि-पदार्थ-विद्या |
| ६ | औषधादि-पदार्थ-विद्या |
| ७ | अनश्वरथादि-शिल्प-विद्या |
| ८ | शिल्प-विद्या |
| ९ | ज्ञानादि-पदार्थ-विद्या |
| १० | प्रार्थनादि-पदार्थ-विद्या |
| ११ | उपमानादि-शिल्प-विद्या |
| १२ | उपमानादि-शिल्प-विद्या |

**ऋग्वेदे तृतीयाष्टके सप्तमोऽध्यायः ॥७॥**

## अष्टकम् ३, अध्यायः ८



---

१. वैयमुद्रिते 'इन्द्रवायू गुणविद्या' इत्यपपाठः ।

ऋग्वेदे तृतीयाष्टके अष्टमोऽध्यायः ॥८॥

# अथ चतुर्थाष्टकः

## अष्टकम् ४, अध्यायः १



१. वैयमुद्रिते 'पदार्थ' पदं नास्ति, हस्तलेखे दृश्यते ।

| | |
|---|---|
| २९ पदार्थ-विद्या | ३२ इन्द्र-युद्धादि-विद्या |
| ३० पदार्थ-विद्या | ३३ पदार्थ-विद्या |
| ३१ पदार्थ-विद्या | |

**ऋग्वेदे चतुर्थाष्टके प्रथमोध्यायः ॥१॥**

## अष्टकम् ४, अध्यायः २

| वर्गः विषयः | वर्गः विषयः | |
|---|---|---|
| १ पदार्थ-विद्या | १५ प्रार्थनादि-पदार्थ-विद्या | ५ |
| २ पदार्थ-विद्या | १६ पदार्थ-विद्या | |
| ३ पदार्थ-विद्या | १७ प्रार्थनादि-पदार्थ-विद्या | |
| ४ क्षत्रादि-विद्या | १८ धर्माधर्म-विद्या | १० |
| ५ इन्द्र-स्तुत्यादि-विद्या | १९ उत्पत्त्यादि-पदार्थ-विद्या | |
| ६ इन्द्र-प्रार्थनादि-पदार्थ-विद्या | २० पदार्थ-विद्या | |
| ७ पदार्थ-विद्या | २१ पदार्थ-विद्या | |
| ८ इन्द्र-सोम-विद्या | २२ पदार्थ-विद्या | |
| ९ इन्द्र-स्तुति-विद्या | २३ पदार्थ-विद्या | १५ |
| १० इन्द्रादि-पदार्थ-विद्या | २४ धर्मादि-विद्या | |
| ११ पदार्थ-विद्या | २५ अग्न्यादि-पदार्थ-विद्या | |
| १२ पदार्थ-विद्या | २६ यज्ञादि-विद्या | |
| १३ पदार्थ-विद्या | २७ पदार्थ-विद्या | |
| १४ पदार्थ-विद्या | २८ पदार्थ-विद्या | २० |

**ऋग्वेदे चतुर्थाष्टके द्वितीयोऽध्यायः ॥२॥**

## अष्टकम् ४, अध्यायः ३

| वर्गः विषयः | वर्गः विषयः | |
|---|---|---|
| १ स्तुत्यादि-पदार्थ-विद्या | ३ पदार्थ-विद्या | |
| २ पदार्थ-विद्या | ४ प्रार्थनादि-विद्या | २५ |

ऋग्वेदे चतुर्थाष्टके तृतीयोऽध्यायः ॥३॥

## अष्टकम् ४, अध्यायः ४

१७ लोकभ्रमणादि-विद्या
१८ शिल्प-रसायनादि-विद्या
१९ शिल्प-विद्या
२० गर्भ-गर्भाधान-विद्या
२१ शिल्प-विद्या
२२ शिल्पादि-विद्या
२३ लोक-शिल्पादि-विद्या
२४ योगमरणादि[1]-विद्या
२५ सवितृ--प्रार्थनादि-विद्या
२६ सवितृ-प्रार्थना-उत्पत्ति-विद्या
२७ ईश्वर-प्रार्थना-पर्जन्यादि-विद्या
२८ वृष्ट्यादि-पदार्थ-विद्या
२९ वृष्ट्यादि-पदार्थ-विद्या
३० सृष्ट्यादि-पदार्थ-विद्या ५
३१ वरुण-लक्षणादि-विद्या
३२ इन्द्राग्नी, युद्धादि-विद्या
३३ पदार्थ-विद्या
३४ यज्ञादि-पदार्थ-विद्या
३५ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या १०
३६ अग्नि-स्तुत्यादि-पदार्थ-विद्या

**ऋग्वेदे चतुर्थाष्टके चतुर्थोऽध्याय ॥४।**

## अष्टकम् ४, अध्यायः ५

वर्गः विषयः

१ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या
३ अग्नि-स्तुत्यादि-पदार्थ-विद्या
४ अग्नि-वायु-स्तुत्यादि-पदार्थ-विद्या
५ अग्नि-स्तुत्यादि-पदार्थ-विद्या

वर्गः विषयः १५

६ अग्नि-स्तुत्यादि-पदार्थ-विद्या
७ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या
८ अग्नि-स्तुत्याकर्षणादि-पदार्थ-विद्या २०
९ अग्नि--स्तुति-प्रार्थनादि-पदार्थ-विद्या
१० पृथिवी-धारणाकर्षण-अग्नि-प्रार्थनादि-विद्या २५

१. द्वितीयतृतीययोर्मन्त्रयोर्यथाक्रमम् 'अनुप्रयाणाम्' 'प्रयाणम्' शब्दयोर्निर्देशात् मरणविद्या। यद्वा 'योगरमण-विद्या' पाठः स्यात्।

११ ईश्वराग्नि-स्तुति-प्रार्थनादि-ज्ञानादि-विद्या
१२ अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या
१३ स्तुत्यादि-पदार्थ-विद्या
१४ अग्नि-प्रार्थनादि-पदार्थ-विद्या
१५ अग्नीश्वर-प्रार्थनादि-पदार्थ-विद्या
१६ अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या
१७ अग्निरनेकनामा, स्तुत्यादि-पदार्थ-विद्या
१८ अग्निरनेकनामा, स्तुति-प्रार्थनादि-पदार्थ-विद्या
१९ अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२० अग्निरनेकनामा, स्तुति-प्रार्थनादि-पदार्थ-विद्या
२१ अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२२ अग्नीश्वर-स्तुत्यादि-पदार्थ-विद्या
२३ अग्नि-स्तुति-प्रार्थना-युद्धादि-विद्या
२४ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२५ अग्निरनेकनामा, स्तुत्यादि-पदार्थ-विद्या
२६ अग्नीश्वर-स्तुति-प्रार्थनादि-विद्या
२७ अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२८ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२९ अग्नि-स्तुत्यादि-पदार्थ-विद्या
३० अग्नि-स्तुत्यादि-पदार्थ-विद्या

**ऋग्वेदे चतुर्थाष्टके पञ्चमोऽध्यायः ॥५॥**

## अष्टकम् ४, अध्यायः ६

| वर्गः | विषयः |
|---|---|
| १ | इन्द्र-स्तुत्यादि-पदार्थ-विद्या |
| २ | इन्द्र-स्तुत्यादि-पदार्थ-विद्या |
| ३ | इन्द्र-स्तुत्यादि-पदार्थ-विद्या |
| ४ | इन्द्र-स्तुति-सख्यादि-विद्या |
| ५ | इन्द्र-स्तुत्यादि-पदार्थ-विद्या |

**ऋग्वेदे चतुर्थाष्टके षष्ठोऽध्यायः ॥६॥**

## अष्टकम् ४, अध्यायः ७



---

१. वैयमुद्रिते '०प्रतिमानिषेधादि०' इत्यपपाठः । हस्तलेखे 'प्रतिमान'-शब्दो दृश्यते ।

२. वैयमुद्रिते 'जगत्कर्त्रेश्वर०' इत्यपपाठः । हस्तलेखे शुद्ध एव पाठो दृश्यते ।

३. वैयमुद्रिते 'इन्द्राग्नीस्तुत्यादि०' इत्यपपाठः । २५

५ [1]इन्द्र-स्तुत्यादि-शूरयुद्धादि-पदार्थ-विद्या
६ इन्द्रेश्वर-स्तुत्यादि-पदार्थ-विद्या
७ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
८ अद्वितीयेश्वर-स्तुति-प्रार्थनादि-विद्या
९ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१० इन्द्र-स्तुत्यादि-पदार्थ-विद्या
११ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१२ इन्द्र-प्रार्थनादि-पदार्थ-विद्या
१३ इन्द्र-स्तुति-प्रार्थना युद्धादि-पदार्थ-विद्या
१४ पदार्थ-विद्या
१५ इन्द्र-प्रार्थना-सोमपानादि-विद्या
१६ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१७ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१८ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१९ इन्द्र-प्रार्थनादि-पदार्थ-विद्या
२० सूर्यादि-प्रकाशकेश्वर-विद्या
२१ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२२ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२३ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२४ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२५ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२६ इन्द्र-स्तुति-प्रार्थना-युद्धादि-विद्या
२७ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२८ इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२९ इन्द्र-प्रार्थना-युद्धादि-विद्या
३० धारण-सोमादि-विद्या
३१ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
३२ इन्द्रेश्वर-प्रार्थनादि-पदार्थ-विद्या
३३ व्यापक-पदार्थ-विद्या
३४ नाना-पदार्थ-विद्या
३५ युद्धादि-विद्या

**ऋग्वेदे चतुर्थाष्टके सप्तमोऽध्यायः ॥७॥**

## अष्टकम् ४, अध्यायः ८

| वर्गः | विषयः |
|---|---|
| १ | पदार्थ-विद्या |
| २ | अग्नि-यज्ञादि-पदार्थ-विद्या |
| ३ | पदार्थ-विद्या |
| ४ | उत्पत्त्यादि-पदार्थ-विद्या |
| ५ | अग्निरेकना[मा][2]; स्तुत्यादि-पदार्थ-विद्या |

१. वैयमुद्रिते 'इन्द्रस्तुत्यादीश्वरयुद्धादिविद्या' इत्यपपाठः। उपरि निर्दिष्टः पाठो हस्तलेखानुसारी द्रष्टव्यः।

२. हस्तलेखे 'मा' शब्दो प्रमादान्नष्टः, वैयमुद्रिते विना कोष्ठकेन प्रवर्धितः।

**ऋग्वेदे चतुर्थाष्टके अष्टमोऽध्यायः ॥८॥**

# अथ पञ्चमाष्टकः

## अष्टकम् ५, अध्यायः १



---

१. गौयमुद्रिते 'अश्विनी-प्रार्थनादि०' इत्यपपाठः।

२. गौयमुद्रिते 'अश्विन्यादि-स्तुति०' इत्यपपाठः।

३. गौयमुद्रिते 'अश्विनी स्तुति०' इत्यपपाठः।

४. गौयमुद्रिते 'अश्विनी-प्रार्थनादि०' इत्यपपाठः।

५. 'उषा' इत्याकारान्त उषसः पर्यायः। द्र०—ग्रन्थकारीयोणादिकोष-व्याख्या ४।२३५, पृष्ठ १६६ रालाकट्रसं०।

६. गौयमुद्रिते 'इन्द्रविष्णू' इत्यपपाठः।

२२ युद्धेश्वर-प्रार्थनाद्यनेक-पदार्थ-विद्या
२३ अग्न्यादि-पदार्थ-विद्या
२४ अग्न्यादि-पदार्थ-विद्या
२५ अग्नि-प्रार्थना-युद्धादि-पदार्थ-विद्या
२६ अग्नि-प्रार्थनादि-पदार्थ-विद्या
२७ अग्नि-प्रार्थनादि-पदार्थ-विद्या ५

**ऋग्वेदे पञ्चमाष्टके प्रथमोऽध्यायः ॥१॥**

## अष्टकम् ५, अध्यायः २

| वर्गः | विषयः |
|---|---|
| १ | अग्नि-स्तुति-पदार्थादि-पदार्थ-विद्या |
| २ | अग्नि-स्तुत्यादि-पदार्थ-विद्या |
| ३ | अग्नि-स्तुत्यादि-पदार्थ-विद्या |
| ४ | अग्नि-प्रार्थनादि-पदार्थ-विद्या |
| ५ | अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ६ | अग्नि-प्रार्थनादि-पदार्थ-विद्या |
| ७ | वैश्वानर-स्तुत्यादि-पदार्थ-विद्या |
| ८ | वैश्वानर-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ९ | वैश्वानर-स्तुत्यादि-पदार्थ-विद्या |
| १० | अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ११ | अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या (१०) |
| १२ | अग्निरेकनामा; स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| १३ | अग्निरनेकनामा; स्तुत्यादि-पदार्थ-विद्या (१५) |
| १४ | अग्नि-स्तुत्यादि-पदार्थ-विद्या |
| १५ | अग्निरनेकनामा; प्रार्थनादि-पदार्थ-विद्या (२०) |
| १६ | अग्नि-प्रार्थनादि-पदार्थ-विद्या |
| १७ | अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| १८ | अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या (२५) |
| १९ | अग्नीश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या |

**ऋग्वेदे पञ्चमाष्टके द्वितीयोऽध्यायः ॥२॥**

## अष्टकम् ५, अध्यायः ३

**ऋग्वेदे पञ्चमाष्टके तृतीयोऽध्यायः ॥३॥**

## अष्टकम् ५, अध्यायः ४



**ऋग्वेदे पञ्चमाष्टके चतुर्थोऽध्यायः ॥४॥**

## अष्टकम् ५, अध्यायः ५

| वर्गः | विषयः |
|---|---|
| १ | ऋतादि-पदार्थ-विद्या |
| २ | प्रार्थनादि-पदार्थ-विद्या |
| ३ | स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ४ | स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ५ | सूर्य-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ६ | स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ७ | स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ८ | धारणादि-पदार्थ-विद्या |
| ९ | स्तुत्यादि-पदार्थ-विद्या |
| १० | पदार्थ-विद्या |
| ११ | पदार्थ-विद्या |
| १२ | नासत्यादि-पदार्थ-विद्या |
| १३ | प्रार्थनादि-पदार्थ-विद्या |
| १४ | प्रार्थनादि-पदार्थ-विद्या |
| १५ | प्रार्थनादि-पदार्थ-विद्या |
| १६ | प्रार्थनादि-पदार्थ-विद्या |
| १७ | प्रार्थनादि-पदार्थ-विद्या |
| १८ | प्रार्थनादि-पदार्थ-विद्या |
| १९ | प्रार्थनादि-पदार्थ-विद्या |
| २० | प्रार्थनादि-पदार्थ-विद्या |
| २१ | स्तुत्यादि-पदार्थ-विद्या |
| २२ | [1]उषा-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| २३ | उषा-प्रार्थनादि-पदार्थ-विद्या |
| २४ | उषा-प्रार्थनादि-पदार्थ-विद्या |
| २५ | उषा-प्रार्थनादि-पदार्थ-विद्या |
| २६ | उषा-प्रार्थनादि-पदार्थ-विद्या |
| २७ | उषा-प्रार्थनादि-पदार्थ-विद्या |

**ऋग्वेदे पञ्चमाष्टके पञ्चमोऽध्यायः ॥५॥**

## अष्टकम् ५, अध्यायः ६

| वर्गः | विषयः |
|---|---|
| १ | उषादि-पदार्थ-विद्या |
| २ | इन्द्रावरुण-युद्धाद्यर्थ-स्तुति-प्रार्थनादि-[2]पदार्थ-विद्या |

---

१. अत्र ६१२ पृष्ठस्था पञ्चमी टिप्पणी द्रष्टव्या ।

२. वैयमुद्रिते 'पदार्थ' पदं प्रमादान्नष्टम्, हस्तलेखे विद्यते ।

**ऋग्वेदे पञ्चमाष्टके षष्ठोऽध्यायः ॥६॥**

## अष्टकम् ५, अध्यायः ७

२५

**ऋग्वेदे पञ्चमाष्टके सप्तमोऽध्यायः ॥७॥**

२०

## अष्टकम् ५, अध्यायः ८



---

१. गैयमुद्रिते 'इन्द्र सोमादि' इत्यपपाठः । हस्तलेखे 'इन्द्रासोमादि' इत्येवोपलभ्यते ।

२. गैयमुद्रिते हस्तलेखे च 'इन्द्र सोमादि' इत्यपपाठः ।

३. हस्तलेखे 'इन्द्रः पराशरेत्यादि' इति पाठः, गैयमुद्रिते 'इन्द्रपराशरेत्यादि'
३० पाठः ।

ऋग्वेदे पञ्चमाष्टके अष्टमोऽध्यायः ॥८॥

# अथ षष्ठाष्टकः

## अष्टकम् ६, अध्यायः १ २०



१. वैयमुद्रिते 'अश्विन्यादि०' इत्यपपाठः ।

२. हस्तलेखे 'मिमादि०' इत्यपपाठः । ३०

५ इन्द्रस्तुत्यादि-पदार्थ-विद्या
६ सूर्येण सह सर्वलोक-धारणा-कर्षण-विद्या
७ इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या
८ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
९ इन्द्र-प्रार्थनादि-पदार्थ-विद्या
१० इन्द्र-प्रार्थनादि-पदार्थ-विद्या
११ इन्द्र-प्रार्थनादि-पदार्थ-विद्या
१२ इन्द्र-प्रार्थनादि-पदार्थ-विद्या
१३ इन्द्र-स्तुति-वृषादि-पदार्थ-विद्या
१४ इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या
१५ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१६ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
१७ इन्द्रेश्वर-स्तुति-धारणादि-पदार्थ-विद्या
१८ इन्द्रेश्वर-स्तुत्यादि-पदार्थ-विद्या
१९ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२० इन्द्रादि-पदार्थ-विद्या
२१ इन्द्रेश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२२ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२३ इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२४ इन्द्रेश्वर-स्तुत्यादि-पदार्थ-विद्या
२५ आदित्यादि-प्रार्थना-पदार्थ-विद्या
२६ आदित्यादि-स्तुति-प्रार्थना-पदार्थ-विद्या
२७ आदित्यादि-प्रार्थना-पदार्थ-विद्या
२८ आदित्यादि-स्तुति-प्रार्थना-पदार्थ-विद्या
२९ वेदप्रमाण-अग्नि-प्रार्थनादि-पदार्थ-विद्या
३० अग्नि-स्तुत्यादि-पदार्थ-विद्या
३१ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या
३२ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या
३३ अग्नि-स्तुत्यादि-पदार्थ-विद्या
३४ अग्नि-स्तुत्यादि-पदार्थ-विद्या
३५ अग्नि-स्तुति-प्रार्थनादि-पदार्थ-विद्या
३६ मरुदादि-पदार्थ-विद्या
३७ मरुदादि-पदार्थ-विद्या
३८ मरुदादि-पदार्थ-विद्या
३९ मरुत्प्रार्थनादि-पदार्थ-विद्या
४० मरुत्प्रार्थनादि-पदार्थ-विद्या

**ऋग्वेदे षष्ठाष्टके प्रथमोऽध्यायः ॥१॥**

## अष्टकम् ६, अध्यायः २



५ १० १५ २० २५

**ऋग्वेदे षष्ठाष्टके द्वितीयोऽध्यायः ॥२॥**

---

१. वैयमुद्रिते 'इन्द्र स्तुत्यादि प्रार्थना०' इत्यपपाठः ।

## अष्टकम् ६, अध्यायः ३

ऋग्वेदे षष्ठाष्टके तृतीयोऽध्यायः ॥३॥

## अष्टकम् ६, अध्यायः ४

३६ अग्न्यादि-पदार्थ-विद्या
३७ पदार्थ-विद्या
३८ इन्द्रादि-पदार्थ-विद्या
३९ इन्द्र-प्रार्थनादि-पदार्थ-विद्या
४० पदार्थ-विद्या
४१ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
४२ पदार्थ-विद्या
४३ स्तुति-प्रार्थनादि-पदार्थ-विद्या
४४ इन्द्र-स्तुति-प्रार्थनादि-पदार्थ-विद्या
४५ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
४६ इन्द्रादि-पदार्थ-विद्या
४७ इन्द्रादि-पदार्थ-विद्या
४८ इन्द्रादि-पदार्थ-विद्या
४९ इन्द्रादि-पदार्थ-विद्या
५० पदार्थ-विद्या
५१ पदार्थ-विद्या
५२ आदित्यादि-पदार्थ-विद्या
५३ आदित्यादि-पदार्थ-विद्या
५४ पदार्थ-विद्या

**ऋग्वेदे षष्ठाष्टके चतुर्थोऽध्यायः ॥४॥**

## अष्टकम् ६, अध्यायः ५

वर्गः विषयः

१ इन्द्रदि-पदार्थ-विद्या
२ इन्द्रादि-पदार्थ-विद्या
३ सख्यादि-पदार्थ-विद्या
४ पदार्थ-विद्या
५ वीरादि-विद्या
६ इन्द्रादि-पदार्थ-विद्या
७ इन्द्रादि-पदार्थ-विद्या
८ राजसेनेन्द्रादि-पदार्थ-विद्या
९ इन्द्रादि-पदार्थ-विद्या
१० पदार्थ-विद्या
११ अग्नि-प्रार्थनादि-पदार्थ-विद्या
१२ अग्नि-स्तुत्यादि-पदार्थ-विद्या
१३ अग्न्यादि-पदार्थ-विद्या
१४ यज्ञादि-पदार्थ-विद्या
१५ पदार्थ-विद्या
१६ पदार्थ-विद्या
१७ पदार्थ-विद्या
१८ शिल्पादि-पदार्थ-विद्या
१९ शिल्पादि-पदार्थ-विद्या
२० शिल्पादि-पदार्थ-विद्या
२१ अग्न्यादि-पदार्थ-विद्या
२२ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२३ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२४ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२५ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२६ अग्नि-स्तुत्यादि-पदार्थ-विद्या
२७ इन्द्र-स्तुत्यादि-पदार्थ-विद्या
२८ इन्द्रादि-पदार्थ-विद्या
२९ इन्द्रादि-पदार्थ-विद्या
३० इन्द्रादि-पदार्थ-विद्या
३१ इन्द्रेश्वरस्तुत्यादि-पदार्थ-विद्या

**ऋग्वेदे षष्ठाष्टके पञ्चमोऽध्यायः ॥५॥**

## अष्टकम् ६, अध्यायः ६



१. अयं पाठो हस्तलेखे विद्यते । युक्तश्चायम्, अस्मिन्नध्यायेऽष्टात्रिंशद् वर्गाणां सत्त्वात् । वैयमुद्रिते प्रमादान्नष्टः ।

**ऋग्वेदे षष्ठाष्टके षष्ठोऽध्यायः ॥६॥**

## अष्टकम् ६, अध्यायः ७



**ऋग्वेदे षष्ठाष्टके सप्तमोऽध्यायः ॥७॥**

# अष्टकम् ६, अध्यायः ८

| वर्गः | विषयः | |
|---|---|---|
| १ | सोम-पवमानादि-पदार्थ-विद्या | |
| २ | पवमानादि-पदार्थ-विद्या | |
| ३ | पदार्थ-विद्या | |
| ४ | सोमादि-पदार्थ-विद्या | |
| ५ | पदार्थ-विद्या | |
| ६ | पदार्थ-विद्या | |
| ७ | सोमादि-पदार्थ-विद्या | |
| ८ | पवमान-सोम-गुणादि-पदार्थ-विद्या | |
| ९ | सोम-गुणादि-पदार्थ-विद्या | |
| १० | सोम-गुणादि-पदार्थ-विद्या | |
| ११ | सोम-गुणादि-पदार्थ-विद्या | |
| १२ | सोम-गुण-सन्तानादि-पदार्थ-विद्या | |
| १३ | सोम-गुणादि-पदार्थ-विद्या | |
| १४ | सोम-गुणादि-पदार्थ-विद्या | |
| १५ | सोमपान-गुणादि-पदार्थ-विद्या | |
| १६ | सोम-गुणादि-पदार्थ-विद्या | |
| १७ | सोम-गुणादि-पदार्थ-विद्या | |
| १८ | सोमपानादि-पदार्थ-विद्या | ५ |
| १९ | सोम-गुणादि-पदार्थ-विद्या | |
| २० | सोम-गुणादि-पदार्थ-विद्या | |
| २१ | सोमपान-गुणादि-पदार्थ-विद्या | |
| २२ | सोम-गुणादि-पदार्थ-विद्या | १० |
| २३ | सोम-गुणादि-पदार्थ-विद्या | |
| २४ | सोम-गुणादि-पदार्थ-विद्या | |
| २५ | सोम-गुणादि-पदार्थ-विद्या | |
| २६ | सोम-गुणादि-पदार्थ-विद्या | |
| २७ | सोम-गुणादि-पदार्थ-विद्या | १५ |
| २८ | सोम-गुणादि-पदार्थ-विद्या | |
| २९ | सोम-गुणादि-पदार्थ-विद्या | |
| ३० | सोम-गुणादि-पदार्थ-विद्या | |
| ३१ | सोम-गुणादि-पदार्थ-विद्या | |
| ३२ | सोम-गुणादि-पदार्थ-विद्या | २० |
| ३३ | सोम-गुणादि-पदार्थ-विद्या | |

ऋग्वेदे षष्ठाष्टके अष्टमोऽध्यायः ॥८॥

—:०:—

# अथ सप्तमाष्टकः

## अष्टकम् ७, अध्यायः १



१. कदाचिदत्र 'सोम-पवमान' पाठः स्यात् ।

**ऋग्वेदे सप्तमाष्टके प्रथमोऽध्यायः ॥१॥**

## अष्टकम् ७, अध्यायः २

१७ प्रार्थनादि-पदार्थ-विद्या
१८ प्रार्थनादि-पदार्थ-विद्या
१९ सोमाद्यौषध-गुणादि-पदार्थ-विद्या
२० सोमाद्यौषध-गुणादि-पदार्थ-विद्या
२१ सोमाद्यौषध-गुणादि-पदार्थ-विद्या
२२ सोम-स्तुति-प्रार्थनादि-पदार्थ-विद्या
२३ पदार्थ-विद्या
२४ सोमाद्यौषध-गुणादि-पदार्थ-विद्या
२५ पदार्थ-विद्या
२६ पदार्थ-विद्या
२७ सोमादि-पदार्थ-विद्या
२८ पदार्थ-विद्या
२९ पदार्थ-विद्या
३० पदार्थ-विद्या
३१ पदार्थ-विद्या
३२ पदार्थ-विद्या
३३ पदार्थ-विद्या

**ऋग्वेदे सप्तमाष्टके द्वितीयोऽध्यायः ॥२॥**

## अष्टकम् ७, अध्यायः ३

| वर्गः | विषयः |
|---|---|
| १ | ईश्वरादि-पदार्थ-विद्या |
| २ | पदार्थ-विद्या |
| ३ | सोमादि-पदार्थ-विद्या |
| ४ | सोमादि-पदार्थ-विद्या |
| ५ | सोमादि-पदार्थ-विद्या |
| ६ | सोमादि-पदार्थ-विद्या |
| ७ | सोमादि-पदार्थ-विद्या |
| ८ | ईश्वरादि-पदार्थ-विद्या |
| ९ | सोमादि-पदार्थ-विद्या |
| १० | सोमादि-पदार्थ-विद्या |
| ११ | सोमादि-पदार्थ-विद्या |
| १२ | ईश्वरादि-पदार्थ-विद्या |
| १३ | ईश्वरादि-पदार्थ-विद्या |
| १४ | ईश्वरादि-पदार्थ-विद्या |
| १५ | पदार्थ-विद्या |
| १६ | सोमादि-पदार्थ-विद्या |
| १७ | ईश्वर-स्तुत्यादि-पदार्थ-विद्या |
| १८ | पदार्थ-विद्या |
| १९ | सोमादि-पदार्थ-विद्या |
| २० | सोमादि-पदार्थ-विद्या |
| २१ | सोमादि-पदार्थ-विद्या |
| २२ | सोमादि-पदार्थ-विद्या |
| २३ | सोमादि-पदार्थ-विद्या |
| २४ | सोमादि-पदार्थ-विद्या |
| २५ | पदार्थ-विद्या |
| २६ | प्रार्थनादि-पदार्थ-विद्या |

**ऋग्वेदे सप्तमाष्टके तृतीयोऽध्यायः ॥३॥**

## अष्टकम् ७, अध्यायः ४

वर्गः विषयः

१ प्रार्थना, सोमादि-पदार्थ-विद्या
२ पदार्थ-विद्या
३ पदार्थ विद्या
४ पदार्थ-विद्या
५ सोम-स्तुत्यादि-पदार्थ-विद्या
६ सोमेश्वरादि-पदार्थ-विद्या
७ ब्रह्मेश्वरादि-पदार्थ-विद्या
८ सोमेश्वर-स्तुत्यादि-पदार्थ-विद्या
९ सोमेश्वरादि-पदार्थ-विद्या
१० सोमादि-पदार्थ-विद्या
११ प्रार्थनादि-पदार्थ-विद्या
१२ प्रार्थनादि-पदार्थ-विद्या
१३ सोमादि-पदार्थ-विद्या
१४ सोमादि-पदार्थ-विद्या
१५ सोमेश्वर-स्तुति-प्रार्थनादि-पदार्थ-विद्या

वर्गः विषयः

१६ सोमेश्वर-स्तुत्यादि-पदार्थ-विद्या
१७ सोमादि-पदार्थ-विद्या ५
१८ सोमेश्वरादि-पदार्थ-विद्या
१९ सोमेश्वर-स्तुत्यादि-पदार्थ-विद्या
२० सोमेश्वर-प्रार्थनादि-पदार्थ-विद्या १०
२१ सोमादि-पदार्थ-विद्या
२२ सोमेश्वर-स्तुत्यादि-पदार्थ-विद्या
२३ सोमादि-पदार्थ-विद्या
२४ सोमादि-पदार्थ-विद्या १५
२५ पदार्थ-विद्या
२६ सोमादि-पदार्थ-विद्या
२७ सोमादि-पदार्थ-विद्या
२८ सोमादि-पदार्थ-विद्या

**ऋग्वेदे सप्तमाष्टके चतुर्थोऽध्यायः ॥४॥** २०

## अष्टकम् ७, अध्यायः ५

वर्गः विषयः

१ सोमादि-पदार्थ-विद्या
२ सोमादि-पदार्थ-विद्या
३ सोमादि-पदार्थ-विद्या
४ पदार्थ-विद्या
५ पदार्थ-विद्या
६ सोमादि-पदार्थ-विद्या
७ सोमादि-पदार्थ-विद्या

वर्गः विषयः

८ सोमादि-पदार्थ-विद्या
९ सोमादि-पदार्थ-विद्या
१० सोमादि-पदार्थ-विद्या २५
११ सोमादि-पदार्थ-विद्या
१२ सोमादि-पदार्थ-विद्या
१३ सोमादि-पदार्थ-विद्या
१४ सोम-गुणादि-पदार्थ-विद्या

**ऋग्वेदे सप्तमाष्टके पञ्चमोऽध्यायः ॥५॥**

## अष्टकम् ७, अध्यायः ६

**ऋग्वेदे सप्तमाष्टके षष्ठोऽध्यायः ॥६॥**

## अष्टकम् ७, अध्यायः ७



१. वैयमुद्रिते एकविंशतितमस्य पाठो नष्टः । अतएवाग्रे वर्गसंख्यायामशुद्धिरपि संजाता ।

२. वैयमुद्रिते 'मृत्युधात्रेश्वराति' इत्यपपाठः ।

३. वैयमुद्रिते 'त्वष्ट्रेश्वरादि०' इत्यपपाठः ।

२७ पदार्थ-विद्या
२८ पदार्थ-विद्या
२९ पदार्थ-विद्या
३० पदार्थ-विद्या

**ऋग्वेदे सप्तमाष्टके सप्तमोऽध्यायः ॥७॥**

## अष्टकम् ७, अध्यायः ८

वर्गः　विषयः

१ इन्द्रादि-पदार्थ-विद्या
२ उत्पत्त्यादि-पदार्थ-विद्या
३ पदार्थ-विद्या
४ उत्पत्त्यादि-पदार्थ-विद्या
५ पदार्थ-विद्या
६ पदार्थ-विद्या
७ अग्न्यादि-पदार्थ-विद्या
८ अग्न्यादि-पदार्थ-विद्या
९ पदार्थ-विद्या
१० पदार्थ-विद्या
११ सवित्रीश्वर-प्रार्थना-पदार्थ-विद्या
१२ सूर्येश्वर-प्रार्थना-पदार्थ-विद्या
१३ पदार्थ-विद्या
१४ इन्द्रादि-पदार्थ-विद्या
१५ [२]अश्व्यादि-पदार्थ-विद्या
१६ पदार्थ-विद्या

वर्गः　विषयः

१७ शिल्पादि-पदार्थ-विद्या
१८ विधवा-विधान-विद्या
१९ युवावस्था-शिल्पादि-पदार्थ-विद्या
२० विवाहादि-पदार्थ-विद्या
२१ त्रिचक्रादि-शिल्प-विद्या
२२ इन्द्रादि-पदार्थ-विद्या
२३ बृहस्पतीन्द्रेश्वर-प्रार्थनादि-पदार्थ-विद्या
२४ इन्द्रादि-पदार्थ-विद्या
२५ बृहस्पतीन्द्रेश्वरादि[३]-पदार्थ-विद्या
२६ इन्द्रादि-पदार्थ-विद्या
२७ इन्द्र-बृहस्पतीश्वरादि-पदार्थ-विद्या
२८ अग्न्यादि-पदार्थ-विद्या
२९ अग्न्यादि-पदार्थ-विद्या

**ऋग्वेदे सप्तमाष्टके अष्टमोऽध्यायः ॥८॥**

---

१. वैयमुद्रिते 'सवित्रेश्वर०' इत्यपपाठः ।

२. वैयमुद्रिते 'अश्वादिपदार्थ-विद्या' इति पाठः । हस्तलेखे 'अश्व्यादि' लिखित्वा रेखयाऽपमृष्टम् ।

३. वैयमुद्रिते 'अश्विन्यादि०' इत्यपपाठः ।

४. हस्तलेखे '०न्द्रेश्वरप्रार्थनादि' इति लिखित्वा 'प्रा' अपमृष्टम् ।

# अथ त्रयोदशं काण्डम्

| प्रपाठक: | अनुवाक: | [सूक्तानि] | विषय: |
|---|---|---|---|
| २८ | १ | [१] | इन्द्र-युद्धादि०, अश्वेश्वरधारणादि०, अग्नीश्वर-प्रार्थनादि०, परमग्निं[1] विदुः कवयः, [2]सत्ये अन्यः समाहितो-ऽप्स्वऽन्यः समिध्यते । [3]ब्रह्म द्वावग्नी ईजाते[3] इत्यादि-पदार्थ-विद्या |
| २८ | २ | [२] | सूर्येश्वरादि०, [4]पश्यन् जन्मानि सूर्ये-श्वरादि०,[5]संबाहुभ्यां भरतीत्यादि०, [6]महांस्ते महतो महिमेत्यादि-पदार्थ-विद्या |
| २८ | ३ | [३] | [7]य ईश्वर आकाशाद्युत्पत्तिरित्यादि०, [8]भूतभवद्भविष्यत्पतिरित्यादि०, [9]प्रक्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशानित्यादि०, [10]तस्य देवस्य क्रुद्धस्य-पदार्थविद्या |
| २८ | ४ | [४] | सवित्राद्यनेकनामेश्वर इत्यादि०, [11]भूतमित्यादि०, [12]धर्मोपदेशोत्प-त्त्यादि०, ईश्वरस्य महाविद्या, |

५ १० १५

१. द्र० समानमग्निमिन्धते तं विदुः कवयः परे । सूक्त १, मन्त्र ४० । २०

२. सूक्त १, मन्त्र ५० । ३. सूक्त १, मन्त्र ४६-५१ :

४. सूक्त २, मन्त्र २२ । ५. सूक्त २, मन्त्र २६ ।

६. सूक्त २, मन्त्र २९ । ७. सूक्त ३, मन्त्र १ ।

८. सूक्त ३, मन्त्र ७ । गैयमुद्रिते 'भविष्योत्पतिरित्यादि' इत्यपपाठः ।

९. सूक्त ३, मन्त्र १-२५ । हस्तलेखे गैयमुद्रिते च 'प्रक्षिणीहि' स्थाने 'प्रतिमुञ्च' इत्यपपाठः । 'ब्रह्मज्यस्य' स्थाने 'ब्रह्मज्ञस्य' इत्यपपाठः । २५

१०. सूक्त ३, मन्त्र १-२५ । ११. सूक्त ४(३), मन्त्र २३ ।

१२. धर्मोपदेशः—सूक्त ४(३); उत्पत्तिः—सूक्त ४(४) ।

[1]त्वोपास्महे वयमित्यादि-पदार्थविद्या

**त्रयोदशं काण्डं समाप्तम् ॥१३॥**

## अथ चतुर्दशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ५ | २६ | १ [१] | [2]सत्येनोत्तभिता भूमिरित्यादि०,अनेक रसायनादि-शिल्पादि०,गार्हपत्यादि०, स्त्रीपुरुषोपदेशादि०, प्रसवादि-पदार्थ-विद्या, स्त्रीपुरुषयोः परस्पर-नियम-विवाहादि , ईश्वरप्रार्थना-स्त्रीपुरुषयोर्धर्मे प्रवृत्त्यर्थाऽधर्मान्नि-वृत्त्यर्थादि-पदार्थविद्या |
| | २६ | २ [२] | जायापति-परस्पर सुनियमोपदेश-विद्यादि०, प्रजावृद्ध्यर्थप्रार्थनादि०, स्त्रीलक्षणादि०,अग्निपरिक्रमणादि०, विवाहविद्यादि०, पूर्वपूर्वाभावे चतुर्थ-पतिपर्यन्तविधि-विद्यादि०, ईश्वर-प्रार्थनादि-पदार्थविद्या |

**चतुर्दशं काण्डं समाप्तम् ॥१४॥**

## अथ पञ्चदशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ३० | १ | [१-७] | जगदुत्पत्त्यादि०, [3]तदेकमभवत् [4]तत्सत्यमभवदित्यादि-धर्मोपदेशादि०, [5]अलंकारादि०, [6]प्राच्यादिदिशादि- |

---

१. सूक्त ४(५-६) मन्त्र ४७-५५ ।

२. सूक्त १, मन्त्र १ । वैयमुद्रिते 'सत्येन्नोत्त०' इत्यपपाठः ।

३. सूक्त १, मन्त्र ३ । ४. सूक्त १, मन्त्र ३ ।

५. सूक्त १, मन्त्र ७-८ । ६. सूक्त २, मन्त्र १ ।

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| | | | लक्षण-[1]अलंकारादि०, [2]ऋत्वादि०, देशादि-लक्षणादि०, [3]अन्तर्देशादि०, [4]भूमि-पशु-नक्षत्रादि०, इतिहास-पुराण-नाराशंसीरित्यादि०,[5]श्रद्धादि-लक्षणादि-पदार्थविद्या |
| ३० | २ | [८-१८] | [6]सभा-राज-प्रजादिरक्षणकरणादि०, [7]इयं वा उ पृथिवी बृहस्पतिरग्निरसावादित्यः क्षत्रमित्यादि०, [8]अग्निहोत्रातिथिलक्षण०, [9]व्रात्यलक्षण०, [10]गृहस्थातिथिव्यवहादि०,भोजनादि-विधानादि०,[11]मनोऽन्नादादि०,[12]तस्य व्रात्यस्य [13]सप्त प्राणाः सप्तापानाः सप्त व्यानाः, एकैकस्य क्रमेण व्याख्यादि-पदार्थविद्या |

**पञ्चदशं काण्डं समाप्तम् ॥१५॥**

## अथ षोडशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ३१ | १ | [१-४] | [14]अतिसृष्टो अपां वृषभ इत्यादि०, [15]कल्याणेच्छाकरणादि०, |

---

१. सूक्त ३ । २. सूक्त ४ । ३. सूक्त ५ ।
४. सूक्त ६ । ५. सूक्त ७ । ६. सूक्त ८, ९ ।
७. सूक्त १० । मन्त्र ६-११ । ८. सूक्त ११ ।
९. सूक्त १२ । १०. सूक्त १३ ।
११. सूक्त १४ । हस्तलेखे वैयमुद्रिते च 'मन्युमन्नादादि' इत्यपपाठः ।
१२. सूक्त १५-१८ ।
१३. हस्तलेखे 'सप्त प्राणाः' पदे 'सप्त व्याना' इत्यतः परं दृश्येते । मन्त्र-पाठानुसारं शोधनं कृतम् ।
१४. सूक्त १ । १५. सूक्त २ ।

| | | | [1]मूर्धाहं रयीणां मूर्धा समानानां भूयासमित्यादि०,[2] प्रार्थना-पदार्थविद्या |
|---|---|---|---|
| ३१ | २ | [५-९] | [3]विद्म ते स्वप्न जनित्रं ग्राह्या पुत्रोऽसि यमस्य करण इत्यादिदुष्टस्वप्न-निवारणादि०, [4]प्रार्थना०, [5]सर्वेभ्यः पाशेभ्यो मा मोचीत्यादि-पदार्थ-विद्या |

५

**षोडशं काण्डं समाप्तम् ॥१६॥**

## अथ सप्तदशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ३२ | १ | [१] | [6]विषासहिं सहमानमित्यादि०, प्रार्थनादीश्वरविद्या, [7]सुधायां मा धेहीतीश्वरप्रार्थनादि०, विष्णवीश्व[र]स्तुतिः, [8]त्वमिन्द्रस्त्वं महेन्द्रस्त्वं लोकस्त्वं प्रजापतिरित्यादि०, [9]विराजे नमः स्वराजे नमः इत्यादीश्वरस्तुतिः |

१०

१५

**सप्तदशं काण्डं समाप्तम् ॥१७॥**

## अथ अष्टादशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ३३ | १ | [१] | [10]ओ चित्सखायमित्यादिसखित्वविद्या०, [11]प्रश्नादि-पदार्थविद्या, [12]अग्नी- |

२०

१. सूक्त ३ ।　२. आदिपदेन सूक्त ४ ।　३. सूक्त ५-६ ।
४. सूक्त ७ ।　५. सूक्त ८ ।　६. सूक्त १, मन्त्र १ ।
७. सूक्त १, मन्त्र ६ ।　८. सूक्त १, मन्त्र १८ ।
९. सूक्त १, मन्त्र २३ ।　१० सूक्त १, मन्त्र १ ।
११. सूक्त १, मन्त्र ६ ।　१२. सूक्त १, मन्त्र २७ ।

२५

| | | | |
|---|---|---|---|
| | | | श्वर-स्तुत्यादि०, [1]सरस्वतीलक्षणादिविद्या, [2]पितृलक्षणादि०, [3]यमादि०, [4]श्राद्धादि-पदार्थ विद्या |
| ३३ | २ | [२] | [5]यमाय......हविरित्यादि०, [6]छन्द इत्यादि०, [7]भद्र-सोम-[8]ऋतादि-[9]शीतादि०, [10]मृत्युर्यमस्यासीद् दूत इत्यादि०,[11]यमो परो वरो विवस्वानित्यादि०, [12]मरणानन्तरगतिः, [13]पितृस्वधादि०, [14]आयुर्विश्वायुस्त्वेत्यादि-पदार्थविद्या |
| ३४ | ३ | [३] | [15]विधवापत्कालनिर्णयादि०, [16]अन्त्येष्टिविधानादि०,[17]सुकर्माण इत्यादि०, [18]चितायां होमविधानादि०, [19]सुरभीणि हवनानि कार्याणि, [20]परजन्म |

---

१. सूक्त १, मन्त्र ४१ । २. सूक्त १, मन्त्र ४४ ।

३. सूक्त १, मन्त्र ४७ ।

४. सूक्त १, मन्त्र ५१-६१ । हस्तलेखे वैयमुद्रिते च 'श्रद्धादि' इत्यपपाठः ।

५. सूक्त २, मन्त्र १ । ६. सूक्त २, मन्त्र ६ ।

७. सूक्त २, मन्त्र १३-१४ । ८. सूक्त २, मन्त्र १५ ।

९. सूक्त २, मन्त्र २२ । १०. सूक्त २, मन्त्र २७ ।

११. सूक्त २, मन्त्र ३२ । १२. सूक्त २, मन्त्र ३३तः आरभ्य ।

१३. सूक्त २, मन्त्र ५२ । अत्र 'स्वधा पितृष्वित्यादि' पाठेन भाव्यम् ।

१४. सूक्त २, मन्त्र ५५ ।

१५. सूक्त ३, मन्त्र १-१२ । १६. सूक्त ३, मन्त्र १२ ।

१७ सूक्त ३, मन्त्र २२ । १८. सूक्त ३, मन्त्र २५-३५ ।

१९. सूक्त ३, मन्त्र ४२ (सुरभीणि कृत्वा) ।

२०. सूक्त ३, मन्त्र ४६ ।

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| | | | शोकादि०, [1]मृत्यु-निवारणादि०, [2]पुनर्जन्मादि-[3]दाहविधान०,[4]चितायां शतधारेत्यादिविधान-विद्या |
| ३४ | ४ | [४] | [5]आरोहत जनित्रीमित्यादि०, [6]पुनर्जन्मादिविधानमित्यादि०, [7]ईश्वरप्रार्थना०, मृतसुखार्थादि०, [8]गमनागमनादि-मृतस्येत्यादि०, [9]अपूपादिसंस्कृतहविर्विधानादि०, [10]चितायामनेकविध-होमविधानादि०, [11]सरस्वतीविधानादि-पदार्थविद्या |

**अष्टादशं काण्डं समाप्तम् ॥१८॥**

## अथ एकोनविंशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ३५ | १ | [१-६] | [12]सं संस्रवन्तु नद्य इत्यादि०, [13]अबीश्वरप्रार्थनादि०, [14]ईश्वरादभययाचनादि०, [15]सहस्रबाहुः पुरुष |

---

१. सूक्त ३, मन्त्र ६२। २. सूक्त ३, मन्त्र ६४।

३. सूक्त ३, मन्त्र ६८-७१।

४. सूक्त ३, मन्त्र ७२। हस्तलेखे वैयमुद्रिते च 'सहस्रधारेत्यादि' अपपाठः।

५. सूक्त ४, मन्त्र १। ६. सूक्त ४, मन्त्र २-७।

७. सूक्त ४, मन्त्र ८-१२। ८. सूक्त १२, मन्त्र १३-१५।

९. सूक्त ४, मन्त्र १६-२७। १०. सूक्त ४, मन्त्र २८-३६।

११. सूक्त ४, मन्त्र ४५-८९। १२. सूक्त १।

१३. सूक्त २। वैयमुद्रिते 'अग्नीश्वर' इत्यपपाठः।

१४. सूक्त ३, मन्त्र ४। १५. सूक्त ६।

| | | | | |
|---|---|---|---|---|
| | | | इत्यादि०, [1]खगोलविद्यादि०, [2]योगक्षेमविचारादि०, [3]शान्ता द्यौरित्यादि०, पापक्षमाकरणादि०, सर्वशान्त्यर्था प्रार्थनेश्वरादि-पदार्थ-विद्या | |
| ३५ | २ | [१०-२०] | [4]शं न इन्द्राग्नी इत्यादि०, [5]ऋतज्ञा इत्यादि०, धर्मादि०, [6]धनुर्वेदादि०, विजयार्थेश्वरस्तुतिप्रार्थनादि०, [7]अभयं नः करत्यन्तरिक्षमित्यादि०, [8]स मा रक्षत्वित्यादि०, [9]सर्वदिक्षु रक्षार्थेश्वरप्रार्थनादि०,[10]मृत्योस्सकाशाद्रक्षार्था प्रार्थनास्तुती ईश्वरस्येत्यादि-पदार्थविद्या | |
| ३५ | ३ | [२१-२६] | [11]गायत्रीत्यादि०,[12]स्वाहादि०,[13]ब्रह्मणस्पतिरित्यादि०, [14]य एनदित्यादि-पदार्थविद्या | |
| ३५ | ४ | [२७-३३] | [15]गोभिष्ट्वा पात्वृषभः इत्यादि०, | |

१. सूक्त ७ ।
२. सूक्त ८ ।
३. सूक्त ९ ।
४. सूक्त १० ।
५. सूक्त ११, मन्त्र ५ ।
६. सूक्त १३ ।
७. सूक्त १५, मन्त्र ५ ।
८. सूक्त १७ ।
९. सूक्त १८-१९ ।
१०. सूक्त २० ।
११. सूक्त २१ ।
१२. सूक्त २२-२३ ।
१३. सूक्त २४ ।

१४. सूक्त २६, मन्त्र १ । हस्तलेखे 'य एनमित्यादि' पाठः, वैयमुद्रिते 'यरममित्यादि' पाठः । उभावप्यपपाठौ मन्त्रपाठानुरोधात् ।

१५. सूक्त २७, मन्त्र १ । हस्तलेखे वैयमुद्रिते च 'पातु तु वृषभः' इत्यपपाठः ।

[1]ये देवा इत्यादि०,[2]शत्रूणामित्यादि०, [3]जहि मे द्विषत इत्यादि०, [4]पुष्टि-कामाय वेधसादि०, [5]पुष्ट्या वन-स्पतिरित्यादि०, [6]ओषध इत्यादि०, [7]शूद्राय चार्य्यायेति०, [8]ओजो देवानामित्यादि-पदार्थविद्या

५

३५ ५ [३४-४५] [9]जङ्गिडोऽसि जङ्गिडेत्यादि०, [10]जहि रक्षांसि०, [11]परि मा दिव इत्यादि०, [12]यक्ष्मादि-निवारणादि०, [13]जीवला नाम ते मातेति, [14]ततः कुष्ठोऽजायतेत्यादि०, [15]मा नो मेधां मा नो दीक्षां मा नो हिंसिष्टं यत् तपः इत्यादि-पदार्थ-विद्या

१०

---

१. सूक्त २७, मन्त्र ११ । २. सूक्त २८, मन्त्र २ ।

१५ ३. सूक्त २८, मन्त्र ६ ।

४. सूक्त ३१, मन्त्र १ । हस्तलेखे वैयमुद्रिते च 'पुष्टिकामेव' इत्यपपाठः ।

५. द्र०—सूक्त ३१, मन्त्र ६ । मन्त्रानुरोधात् 'पुष्टया वनस्पति' इत्यपपाठः ।

२० ६. द्र०—सूक्त ३२, मन्त्र १ । अत्र पाठभ्रंशः प्रतिभाति ।

७. सूक्त ३२, मन्त्र ८ । ८. सूक्त ३३, मन्त्र ४ ।

९. सूक्त ३४, मन्त्र १ । हस्तलेखे वैयमुद्रिते च 'अङ्गिरा असि' इत्यपपाठो मन्त्रानुरोधात् ।

१०. सूक्त ३४, मन्त्र ६ । ११. सूक्त ३५, मन्त्र ४ ।

२५ १२. सूक्त ३६ ।

१३. सूक्त ३६, मन्त्र ३ । 'जीवला···हिंसिष्ट मे' इति पाठो वैयमुद्रिते प्रमादान्नष्टः । हस्तलेखे विद्यते ।

१४. सूक्त ३६, मन्त्र ६-८ । हस्तलेखे 'तत्र कुष्ठोऽजायतेत्यादि०' अपपाठः ।

३० १५. सूक्त ४०, मन्त्र ३ । अत्र 'मे तप' इति हस्तलेखेऽपपाठः ।

| | | | |
|---|---|---|---|
| ३५ | ६ | [४६-५४] | [1]प्रजापतिष्ट्वा बध्नादित्यादि०, [2]भद्रे पारमशीमहि इत्यादि०, [3]घृताचीत्यादि०, [4]रात्रिः शिवमित्यादि०, [5]ये ते रात्र्यनड्वाह इत्यादि०, [6]कामस्तदग्रे समवर्त्तते-त्यादि-कामविद्यादि०, [7]पूर्णः कुम्भोऽधि काल आहित इत्यादीश्वरः कालः, [8]कालो ब्रह्मेत्यादि-पदार्थ-विद्या |
| ३५ | ७ | [५५-७२] | [9]रात्रिंरात्रिमप्रयातमित्यादि०, [10]अग्निस्तुत्यादि०, [11]अहरहर्बलिमाहरन्त इत्यादि०, [12]स्वप्नादि०, [13]संवत्सरेत्यादि०, [14]यज्ञमित्यादि०, [15]उत शूद्र उत आर्ये इत्यादि०, [16]उत्तिष्ठ ब्रह्मणस्पते आयु वर्द्धये- |

---

१. सूक्त ४६, मन्त्र १। हस्तलेखे वैयमुद्रिते च 'बध्नातीत्यादि' इत्यपपाठः। २. सूक्त ४७, मन्त्र २।

३. सूक्त ४८, मन्त्र ६।

४. सूक्त ४९, मन्त्र ५। अत्र कदाचित् 'शिवां रात्रिम्' युक्तः पाठः स्यात्। ५. सूक्त ५०, मन्त्र २। ६. सूक्त ५२, मन्त्र १।

७. सूक्त ५३, मन्त्र ३।

८. द्र०—सूक्त ५४, मन्त्र १। अत्र 'कालाद् ब्रह्मेत्यादि' पाठो युक्तो ज्ञेयः।

९. सूक्त ५५, मन्त्र १। 'रात्रिमप्रयात्वित्यादि' इत्यपपाठः।

१०. अस्मिन्नेव (५५) सूक्तेऽग्निस्तुतिः। ११. सूक्त ५५, मन्त्र ७।

१२. सूक्त ६२, ६३। स्वप्नादि···मित्यादि' पाठो वैयमुद्रिते प्रमादान्न मुद्रितः। १३. सूक्त ५८, मन्त्र १। १४. सूक्त ५८, मन्त्र ५।

१५. सूक्त ६२, मन्त्र १। १६. सूक्त ६३, मन्त्र १।

त्यादिप्रार्थना०, 'सर्वमायुर्जीव्यास[मित्यादि-]पदार्थ-विद्या

**एकोनविंशं काण्डं समाप्तम् ॥१९॥**

## अथ विंशं काण्डम्

| प्रपाठकः | अनुवाकः | [सूक्तानि] | विषयः |
|---|---|---|---|
| ३६ | १ | [१-१३] | [1]इन्द्र त्वा वृषभं वयमित्यादि०, [2]सोमपानगुण-विद्यादि०, यज्ञादि०, [3]इन्द्रं त्वा सत्पतिमित्यादि०, [4]पितेव न इत्यादि०, [5]सृष्टिरीश्वरकृतेत्यादि०, [6]इन्द्रेश्वरेत्यादि०, [7]एको देवेत्रेत्यादि-पदार्थ-विद्या |
| ३६ | २ | [१४-१७] | [8]सखायमिन्द्रमूतये इत्यादि०, [9]अनवद्यरूपेत्यादि०, उपमानविद्यादि०, [10]ज्योतिरार्यमित्यादि०, [11]बृहस्पतिः पातु सदा न इत्यादि-पदार्थ-विद्या |
| ३६ | ३ | [१८-३३] | [12]इन्द्र त्वायन्तः सखाय इत्यादि०, इन्द्रेश्वरेत्यादिस्तुत्यादि-पदार्थ-विद्या। [13]अभि त्वा वृषभा सुते- |

---

१. सूक्त ६९, मन्त्र १-४; सूक्त ७०, मन्त्र १।

२. सूक्त १, मन्त्र १। ३. सूक्त २-५।

४. द्र०—सूक्त ६, मन्त्र १। अत्र 'इन्द्र' त्वा वृषभम्' पाठो वर्तते। 'सम्पते' सम्बुद्धौ चतुर्थमन्त्रे श्रूयते।

५. सूक्त ८, मन्त्र २। ६. सूक्त ९-११।

७. सूक्त १२, मन्त्र ५। ८. सूक्त १४, मन्त्र ३।

९. सूक्त १६, मन्त्र ३। १०. सूक्त १७, मन्त्र ४।

११. द्र०—सूक्त १७, मन्त्र ११। मन्त्रे 'बृहस्पतिर्नः परिपातु' इति पाठः।

१२. सूक्त १८, मन्त्र १। १३. सूक्त २२, मन्त्र १।

| | | | |
|---|---|---|---|
| | | | त्यादि०, [1]योगेयोगे तवस्तरं वाजे-वाजे हवामहे, सखाय इन्द्रमूतये इत्यादि०, [2]इन्द्राय शूषं हरिवन्त-मर्चतेत्यादि०, [3]हरये सूर्यायेत्यादि-पदार्थ विद्या ५ |
| ३६ | ४ | [३४-३७] | [4]यो जात एव प्रथमो मनस्वान्देवो देवानित्यादि-पदार्थ विद्या, [5]यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्र इत्यादि०, सोमेन्द्रविद्या-पदार्थ विद्या १० |
| ३६ | ५ | [३८-६६] | [6]इन्द्र सोमपानादि-पदार्थविद्या, [7]इन्द्रेश्वरादि-पदार्थ विद्या, [8]सूर्ये-श्वरस्तुत्यादि-पदार्थविद्या, [9]इन्द्र-सूर्येश्वरप्रार्थनादि-पदार्थ-विद्या, [9]इन्द्रेश्वरधारणादि-विद्या०, [10]त्व- १५ मिन्द्राभिभूरसि त्वं सूर्यमरोचयः, विश्वकर्मा विश्वदेवो महाँ असी-त्यादि०, [11]इन्द्रेश्वरसख्यादि-पदार्थ-विद्या |
| ३६ | ६ | [६७-७१] | [12]वनोति हि सुन्वन्क्षयमित्यादि०, २० इन्द्र-सोमपान-पात्रादि-पदार्थविद्या, [13]तस्मा इन्द्राय गायतेत्यादि- |

१. सूक्त २६, मन्त्र १ । २. सूक्त ३०, मन्त्र २ ।

३. सूक्त ३२, मन्त्र १ । ४. सूक्त ३४, मन्त्र १ ।

५. सूक्त ३४, मन्त्र ६ । ६. सूक्त ३८ । २५

७. सूक्त ३९ । ८. सूक्त ४१, मन्त्र ३ ।

९. सूक्त ४७ ।

१०. सूक्त ६२, मन्त्र ६ । हस्तलेखे वैयमुद्रिते च 'त्वमिन्द्रादि······ मरोचथ······महाँ अस्ति' इत्यपपाठः । ११. सूक्त ६५ ।

१२. सूक्त ६७, मन्त्र १ । १३. सूक्त ६८, मन्त्र, मं० १० । ३०

पदार्थविद्या, [1]इन्द्रेश्वर-स्तुति-प्रार्थना युद्धादि-जयार्थम्, [2]महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे इत्यादि-पदार्थविद्या

३६ ७ [७२-९०] [3]विश्वेषु हि त्वा सवनेषु तुञ्जते, इन्द्रादि-पदार्थविद्या, [4]इन्द्रेश्वर-स्तुत्यादि-पदार्थविद्या, [5]जलादि-पदार्थविद्या, [6]अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतनेत्यादि०, सोमेन्द्रादि-पदार्थविद्या, [7]यस्तस्तम्भ सहसा वि ज्मो अन्तान्बृहस्पतिस्त्रिषधस्थो रवेणेत्यादि-पदार्थविद्या, बृहस्पतीश्वरप्रार्थनादि०, इन्द्रेश्वर-प्रार्थना, सख्यादि-पदार्थविद्या

३६ ८ [९१-९६] [8]इमां धियमित्यादि०, [9]ते सत्येनेत्यादि०, [10]सत्यामाशिष कृणुतेत्यादि०, [11]अर्चत प्रार्चतेत्यादि०, [12]सुदेवो असि वरुणेत्यादि०, [13] इन्द्रं जातमुपासते इत्यादि०, [14]मघ[व]न्नित्यादि०, [15]इन्द्राय शूषमर्चतेत्यादि-पदार्थविद्या, [16]शतशारदायेत्यादि-[पदार्थविद्या]

---

१. द्र०—सूक्त ६९,७० । २. सूक्त ७१, मन्त्र १ ।
३. सूक्त ७२, मन्त्र १ । ४. सूक्त ७३-७६ ।
५. द्र०—सूक्त ७७, मन्त्र ७ । ६. सूक्त ८७, मन्त्र १ ।
७. सूक्त ८८, मन्त्र १ । ८. सूक्त ९१, मन्त्र १ ।
९. सूक्त ९१, मन्त्र ८ । १०. सूक्त ९१, मन्त्र ११ ।
११. सूक्त ९२, मन्त्र ५ । १२. सूक्त ९२, मन्त्र ९ ।
१३. सूक्त ९३, मन्त्र ४ ।
१४. सूक्त ९४, मन्त्र ९ । कैयमुद्रिते 'मघवन्नित्याति' इत्यपपाठः ।
१५. सूक्त ९५, मन्त्र २ । १६. सूक्त ९६, मन्त्र ७ ।

३६ ९ [९७-१२६][1]भूषतीत्यादि०,[2]त्वं दाता प्रथम इत्यादि०,[3]यो राजेत्यादि०, [4]स्वादोरित्यादि०, [5]प्रतिमानादि०, [6]इमा ब्रह्म बृहदित्यादि०, [7]अथर्वावोचत्त्वां तन्वमिन्द्रमेवेत्यादि०, [8]वितन्वते [प्रति] ५ भद्राय भद्रमित्यादि०, [9]विश्वस्मादिन्द्र उत्तर इत्यादि०, [10]वृषाकपायीत्यादि०, [11]य एष स्वप्ननंशन इत्यादि-पदार्थविद्या

**अथ कुन्ताप-सूक्तानि** —[12]भद्रेण वचसा वयमित्यादि०,[13]गोभयाद् गोगतिरिवेत्यादि०, [14]आदला बुकमेककम्, अलाबुकं निखातकम् ॥१॥ १० इत्यादि०,[15]उदभिर्यथालाबुनीत्यादि०, [16]इदं राधो विभु प्रभ्वित्यादि । **इति कुन्ताप-सूक्तानि समाप्तानि । परिशिष्टानि प्रक्षिप्तानीति विज्ञेयम् ।**

[17]**यद्वा वाणीत्यादि०**,[18]ऋतस्येत्यादि०,[19]मधुमनित्यादि-पदार्थविद्या ॥

**विंशं काण्डं समाप्तम्** ॥२०॥ १५

**इत्यथर्ववेदस्य विषय-सूची समाप्ता ॥**

***ओं नमः परमेश्वराय***

---

१. सूक्त ९७, मन्त्र २ । २. सूक्त १०४, मन्त्र ४ ।
३. सूक्त १०५, मन्त्र ४ । ४. सूक्त १०७, मन्त्र ६ ।
५. सूक्त १०७, मन्त्र १० । ६. सूक्त १०७, मन्त्र ११ । २०
७. सूक्त १०७, मन्त्र १२ । ८. सूक्त १०७, मन्त्र १५ ।
९. सूक्त १२६, मन्त्र १ । १०. सूक्त १२६, मन्त्र १३ ।
११. सूक्त १२६, मन्त्र २१ । हस्तलेखे वैयमुद्रिते च 'य इह स्वप्ननाशन' इत्यपपाठः ।
१२. सूक्त १२७, मन्त्र १४ । १३. सन्दिग्धोऽयं पाठः । २५
१४. सूक्त १३२, मन्त्र १,२ । १५. संदिग्धोऽयं पाठः ।
१६. सूक्त १३५, मन्त्र ९ । १७. सूक्त १४२, मन्त्र ४ ।
१८. सूक्त १४३, मन्त्र ३ ।
१९. सूक्त १४३, मन्त्र ८ । हस्तलेखे वैयमुद्रिते च 'मधुमान्'इत्यपपाठः ।

# अथ यजुर्वेदस्य विषय-सूची

## अध्यायः १

| मन्त्रः | विषयः |
|---|---|
| १ | ईश्वरप्रार्थनादि |
| २ | वस्वाद्यनेकनामेश्वरस्य पदार्थ-विद्या |
| ४ | धर्मोपदेशप्रार्थनादि-पदार्थ-विद्या |
| ७ | दुष्टनिवारणार्थेश्वरप्रार्थनादि-पदार्थ-विद्या |
| ८ | ईश्वरस्योत्तमत्वादि-पदार्थ-विद्या |
| १२ | 'विष्णवबादि-पदार्थ'-विद्या[1] |
| १३ | हृव्यशोधनाग्न्यादि०[2] |
| १६ | ईश्वरप्रार्थना-धर्मोपदेशादि-विद्या |
| २० | प्राणाद्यनेक[ना]मेश्वरादि-पदार्थ-विद्या |
| २५ | ओषधीशत्रुवधादि० |
| २६ | द्वेषत्यागादि० |
| ३१ | तेजोऽसीत्यनेकनामेश्वरादि० |

---

## [3]अध्यायः २

| मन्त्रः | विषयः |
|---|---|
| ४ | पदार्थ-विद्यादि० |
| ६ | यज्ञरक्षादि-विष्णु-प्रार्थना |
| १० | इन्द्रियरक्षणार्थ-इन्द्र-प्रार्थना |
| १० | सत्या नः सन्त्वाशिष आदि० |
| १४ | यज्ञप्रतिष्ठादि० |
| १६ | वृष्टयादि-पदार्थविद्या |

---

१. हस्तलेखे 'विष्णवग्न्यादि' इति पाठः। मन्त्रेऽग्नेरनिर्देशादपा च निर्देशाच्छोधितोऽयं पाठः। वैयमद्रिते 'देवीगापोऽग्न्यादि' इत्यपपाठः।

२. यत्र यत्र ०विन्दुनिर्देशस्तत्र तत्र 'पदार्थविद्या' पदस्य शेषत्वं ज्ञेयम्।

३ विशेषः—द्वितीयाध्यायादारभ्याग्रन्थान्तं हस्तलेखे मन्त्रसंख्या न निर्दिश्यते। सर्वोऽपि पाठः सयुक्त एव पठ्यते। मन्त्र-संख्या-निर्देशः पृथग्विषय-निर्देशश्च वैयमुद्रिते सम्पादकेन प्रत्तः। अस्माभिरपि सारल्याय स एव क्रम आदृतः। वैयमुद्रिते यत्र संख्यानिर्देशेऽशुद्धिरासीत्, सा परिमृष्टा।

१७ परिधि-रेखागणितादि-विद्या
२० अग्नीश्वरप्रार्थनादि-पदार्थ-विद्या
२१ वेदोऽसीत्यादीश्वरादि-पदार्थ-विद्या
२७ गृहपत्यादि-विद्या
३१ पित्रादि-पदार्थ-विद्या
३४ स्वधा स्थ तर्पय मे पितॄ-नित्यादि०

---

## अध्यायः ३

5

| मन्त्रः | विषयः |
|---|---|
| १ | अग्न्यतिथ्यादि-पदार्थ-विद्या |
| ६ | पृथिवीभ्रमणादि-पदार्थ-विद्या |
| ७-१६ | अग्नीश्वर-अग्निहोत्र-यज्ञाद्यनेक-विद्या |
| १७-२३ | अग्नीश्वरप्रार्थनादि-पदार्थ-विद्या |
| २४ | पितेव [1]सूनवे इत्यादीश्वराद्यनेक-पदार्थ-विद्या |
| २५-३४ | अग्नीश्वरस्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ३५-४९ | [2]सवित्रीश्वरादि-पदार्थ-विद्या |
| ५० | दानाऽऽदानादि-विद्या |
| ६० | त्र्यम्बकमित्यादीश्वर-प्रार्थनादि-पदार्थ-विद्या |

10

---

## अध्यायः ४

15

| मन्त्रः | विषयः |
|---|---|
| २-६ | [3]अबीश्वरादि-प्रार्थना-पदार्थ-विद्या |
| ७ | सरस्वत्यादि-पदार्थ-विद्या |
| ९ | शिल्पादि-पदार्थविद्या, मा मा हिंसीरित्यादीश्वरस्य प्रार्थना |
| १० | यज्ञेश्वरादि-पदार्थविद्या |

---

१. हस्तलेखे वैयमुद्रिते च 'सूनवेत्यादी०' इत्यपपाठः ।

२. हस्तलेखे वैयमुद्रिते च 'सवितृश्वरादि' इत्यपपाठः । 20

३. हस्तलेखे वैयमुद्रिते च 'आपेश्वरादि' इत्यपपाठः । प्रतीक-निर्देशे 'इमा आप ईश्वरादि' इत्येवं पाठेन भाव्यम् ।

१४ राजप्रजादि-पदार्थविद्या, [1]वरुणादि-पदार्थ-विद्या

२८ अग्नीश्वरादि-प्रार्थना-पदार्थ-विद्या

३५ मित्रवरुणेश्वरादि-पदार्थविद्या

---

## अध्यायः ५

५ मन्त्रः विषयः

१-५ अग्नीश्वरस्तुत्यादि-पदार्थ-विद्या

६ ब्रह्मचर्यादि-व्रत-सिद्धयर्थे-श्वर प्रार्थनादि-पदार्थ-विद्या

१० १४ योगादि-विद्या

१५-२१ विष्णवीश्वर-स्तुत्यादि-पदार्थविद्या

मन्त्रः विषयः

२२-२६ राक्षसदुष्टविनाशादि-पदार्थविद्या

२९ आयुवृद्ध्यादि-विद्या

३१-३५ ईश्वरस्यानेकनाम-स्तुत्यादि-पदार्थ-विद्या

३६ अग्नीश्वरस्तुत्यादि०

४० व्रतदीक्षादि०

४२-४३ अग्नीश्वर-प्रार्थना, वनस्पत्यादि-विद्या

---

## अध्यायः ६

१५ मन्त्रः विषयः

१ दुष्टताडनादि०

३ विष्णुसूर्यादि-पदार्थ-विद्या

४-५ [विष्णु-] परमेश्वरादि-पदार्थ-विद्या

मन्त्रः विषयः

७ [2]त्वष्ट्रादि०

९ अग्नीश्वर-स्तुत्यादि०

११ यज्ञादि-पदार्थ-विद्या

१७ जलादि-पदार्थ-विद्या

---

२० १. 'वरुणादि' पाठे ३०तमस्य मन्त्रस्य विषयः स्यात् । 'सवित्रादि' पाठे कल्प्यमाने २५तमस्य, 'मित्रादि' पाठे २७तमस्य ।

२. हस्तलेखे ग्रैयमुद्रिते च 'त्वष्टादि' इत्यपपाठः ।

---

## अध्यायः ७



---

१. इत आरभ्याग्रिमाध्याये २६तमस्य मन्त्रस्य विषयपर्यन्तः पाठः केनचिन्मूढेन लेखकेनात्यन्तमशुद्धो लिखितः । तस्य यथासम्भवमत्र शोधनं कृत्वा निर्देशः कृतः ।

२. हस्तलेखे वैयमुद्रिते च 'दृदेत्यादि' इत्यपपाठः ।

३. प्रतीकनिर्देशोऽयम् ।

४. अयं पाठो वैयमुद्रिते त्रुटितः, हस्तलेखे वर्तते ।

३६ मरुत्वन्तं वृषभं वावृधानम-कवारिं दिव्यᳪ शासमिन्द्र-मित्यादि०

४३ अग्नीश्वर-प्रार्थनादि-पदार्थ-विद्या

४८ कामेश्वर-विद्या

---

## अध्यायः ८

५

| मन्त्रः | विषयः |
|---|---|
| १-१२ | ईश्वर-प्रार्थनादि-पदार्थ-विद्या, ईश्वर-विद्या |
| १३ | देवकृतस्यैनसोऽवयजनमसी-त्यादि-ईश्वरस्य स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| २३ | धर्माद्युपदेशादि-पदार्थ-विद्या |
| २४-२५ | यज्ञानेकविध-पदार्थ-विद्या |
| २६-३० | निषेकगर्भाधानादि० |
| ३३ | इन्द्रेश्वरस्तुत्यादि-पदार्थविद्या |
| ३६ | ईश्वरविषया महाब्रह्म-विद्या |
| ३७ | इन्द्रश्च सम्राड् वरुणश्च राजा तौ त इत्यादीश्वर-विद्या |
| ३८ | वर्चाद्यग्नीश्वर-प्रार्थना |
| ३९ | ओजिष्ठोऽहं मनुष्येषु भूया-समित्यादीन्द्रेश्वर-प्रार्थनादि-विद्या |
| ४१ | उपयामगृहीतोऽसि सूर्येश्वर-प्राण-ग्रहणादि-प्रार्थना-विद्या |
| ४५-४६ | विश्वकर्मेश्वरादि-पदार्थ-विद्या |
| ४९ | बृहच्छुक्र इतीश्वरादि-विद्या |
| ५१ | इह र[तिरि]त्यादीश्वरो-पदेशादि० |
| ५२-५३ | प्रार्थना |
| ५५ | इन्द्रश्चेत्याद्यनेक-पदार्थ-विद्या |

१० १५

---

## अध्यायः ९

२०

| मन्त्रः | विषयः |
|---|---|
| १-६ | देव सवित इत्यादि-धर्मे-श्वरादि-विद्या |
| ७-२० | वेगादि[1]-विद्या |
| २१-२७ | आयुर्यज्ञेन कल्पतामि-त्यादि-ईश्वरप्रार्थनोपदेशादि० |
| २८ | अग्निस्तुत्यादि[2]-पदार्थविद्या |

---

१. आदि पदेन वाज-सव-वाजि (=दधिक्रावा)-अप्यादयः सग्राह्याः ।

२५ २. आदिपदेन पूष-मित्र-वसु-रुद्र-आदित्याना स्तुतिरत्र सग्राह्या ।

३५-३६ अग्निनेत्रेभ्य इत्यादि०[1]
[३७ दुष्टराक्षरणम्
३८ राजधर्म-विद्या
३९-४० राजाभिषेकः]

## अध्यायः १०

मन्त्रः विषयः

[१ अपो देवा इत्यभिषेक-विद्या]
२-५ वृष्ण ऽ ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि इत्यादि-प्रार्थना
६-७ वाचो बन्धुरीश्वरादि-पदार्थ-विद्या
८-१८ क्षत्रस्योल्बमसि इत्यादि-राजप्रजादि-विद्या
१९-२१ विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि इत्यादि धारणादि-पदार्थ-विद्या
२२-२३ तिष्ठा रथमित्यादि-शिल्प-विद्या
२४-२५ हꣳसः शुचिषद् इत्यादि-व्यापकेश्वर-पदार्थ-विद्या

मन्त्रः विषयः

२६-२७ [2]क्षत्रस्य योनिरसीत्यादि-पदार्थ-विद्या
२८-२९ ब्रह्मँस्त्वं ब्रह्मासि सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजा इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेव इत्यादि-ईश्वरस्यानेक-नामानि
३०-३४ सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुना दशम्या देवतया प्रसूतः प्रसर्पामीत्यादि-पदार्थविद्या

## अध्यायः ११

मन्त्रः विषयः

१-३ युञ्जान इत्यादि-पदार्थ-विद्या

मन्त्रः विषयः

४-५ युञ्जते मन ऽ उत युञ्जते धियो इत्यादि-योग-विद्या

---

१. विन्दुनिर्देशेन 'पदार्थ-विद्या' इति शेषः।

२. वैयमुद्रिते 'क्षत्रस्य......पदार्थविद्या' पाठो नष्टः, हस्तलेखे वर्तते।

६-६ यः पार्थिवानि विममे स एतशो रजाꣳसि देव. सविता महित्वना इत्यादि-परमाण्वादिभिर् ईश्वरस्य सृष्टिः

५ १०-१३ अभ्रिरसि नार्यसि त्वया वयमग्निमित्यादि०, ईश्वर-पृथिव्याद्यलंकारादि-पदार्थ-विद्या

१४ योगेयोगे तवस्तरं वाजेवाजे

१० हवामहे इत्यादि-सर्वकर्मस्वीश्वरप्रार्थना सर्वैः कार्येत्यादि०

[१६-३५] [1]अग्नीश्वरादि०

३६-४४ वसिष्ठः सहस्रम्भरः शुचिजिह्वो ऽअग्निरि-

१५ त्यादि०[2]

४५-५२ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर इत्याद्यग्नीश्वर-प्रार्थनादि-पदाथ-विद्या

५३-५७ मित्रः सꣳसृज्य पृथिवी भूमिं च ज्योतिषा सहेत्यादि-पदार्थ-विद्या

५८-५९ ईश्वरपृथिव्यादि-धारण-विद्या

६०-६५ रोगनिवारणार्थ[3]-धूपादि-विद्या

६६-७५ आकूतिमग्निं प्रयुजꣳ स्वाहेत्यादि०[2]

[७६-८० अग्नि-सेनापत्यादिद्वारा स्तेनादीनां नाशः

८२ ब्रह्मक्षत्रयोर्बलवीर्यवृद्धिः, शत्रूणां नाशः

८३ अन्नादि-प्राप्त्यर्थमीश्वर-प्रार्थना]

## अध्यायः १२

मन्त्रः विषयः

२० १-३ दृशानो रुक्मेत्यादि०, [द्यौ-सवितृ-विद्या]

४ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो इत्यादीश्वरस्य शरीरा-लंकार-विद्या

[५-७ विष्णवग्नि-पदार्थविद्या]

८-१५ अग्नेऽअङ्गिरः इत्यादि-पदार्थ-विद्या[4]

१६-३३ अन्तरग्ने इत्याद्यग्नीश्वर-प्रार्थनादि-पदार्थ-विद्या

---

२५ १. 'अग्नीश्वरादि०' इति पूर्वेण सम्बद्धः पाठो वैयमुद्रिते उत्तरेण 'वसिष्ठः' इत्यादिना संयोजितः। अग्नेर्वर्णनं १६-३५ पर्यन्तं मन्त्रेषु श्रूयते।

२. 'पदार्थ-विद्या' इति शेषः।

३. वैयमुद्रिते 'रोगनिवारणादि' इत्यपपाठः।

४. अग्नि (=राजा)-वरुण-भान्वादीनां पदार्थानां विद्या।

३४-३६ प्र प्रायमग्निर्भरतस्य शृण्वे इत्यादि-पदार्थ-विद्या
३७-४४ गर्भो ऽअस्योषधीनामित्याद्यग्नीश्वर-स्तुत्यादि-पदार्थ-विद्या
४५-५४ येऽत्र स्थ पुराणा ये च नूतना इत्यादि पदार्थ-विद्या
५५-५८ ताऽ अस्य सूददोहसः सोममित्यादि०[1]
५९-६० अग्ने त्वं पुरीष्यो रयिमान् पुष्टिमाँ२ ऽअसीत्यादीश्वरस्तुतिप्रार्थनादि-पदार्थ-विद्या
६१-६६ प्रजापतिर्विश्वकर्मा वि मुञ्चत्वित्यादि०[1]
६७-७० सीरा युञ्जन्ति कवय इत्यादि-पदार्थ-विद्या
७१-७४ लाङ्गलमित्यादि-पदार्थ-विद्या
७५-७९ याऽ ओषधीरित्यादि-रोगनाशार्थ-पदार्थ-विद्या
८०-९६ यत्रौषधीः समग्मत राजानः समिताविव । विप्रः स उच्यते भिषग्रक्षोहामीवचातन इत्यादि-भिषगादि-पदार्थ-विद्या
९७-१०१ नाशयित्री बलासस्यार्शस ऽ उपचितामसीत्यादि-रोगनाशार्थ-ओषध्यादि-पदार्थ-विद्या ५
१०२-१०५ मा मा हिँ॑सीज्जनिता यः पृथिव्या यो वा दिव॑ सत्यधर्म्मा व्यानडित्यादीश्वर-प्रार्थनादि-पदार्थ-विद्या १०
१०६-११३ दधासि दाशुषे कवे इत्यादीश्वर-स्तुत्यादि-पदार्थ-विद्या १५
११४-११६ भवा नः सप्रथस्तमः सखा वृधे इत्यादि-सख्यादि-पदार्थ-विद्या
११७ अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य सम्राडेको विराजतीति ईश्वरस्तुत्यादि-पदार्थ-विद्या २०

## अध्यायः १३

मन्त्रः विषयः
[१-२ पदार्थ-विद्या]
३-४ ब्रह्महिरण्यगर्भेश्वर-स्तुतिप्रार्थनादि-पदार्थ-विद्या २५

१. 'पदार्थ-विद्या' इति शेषः ।

६-८ सर्पादि-पदार्थविद्या
९-१२ अग्न्यादि०[1]
१३-१५ ऊर्ध्वो भव अग्न्यादि०
१६-१७ ध्रुवादि०[2]
५ १८ भूरसीत्यादीश्वरादि०[1]
२४ विराड्[ज्यो]तिरधारय-
दित्यादि०
[२५ मधुमाधव-पदार्थ-विद्या]
२६ सहस्वारातीरित्यादि०
१० [२७-२९ मधुमत्व-प्रार्थना]
३०-३१ वृष्ट्यादि०
३२-३५ महीत्यादीश्वरादि०
३६-३९ अग्ने युक्ष्वा हि ये तवा-
श्वा[स] इत्यादि-शिल्प-विद्या
४०-४१ अग्निर्ज्योतिषा ज्योति-
ष्मानित्यादि-अग्नीश्वरादि०
४२-५० [3]अग्ने मा हिंसीः परमे
व्योमन्नित्यादि०
५१-५२ अजो ह्यग्नेरजनिष्ट
शोकादित्यादि०
५३ अपां त्वा···सदने सादयामी-
त्यादि०
५४-५६ अयं [4]पुरो भुवस्तस्ये-
त्यादि०
५७-५८ इदमुत्तरात् स्वस्तस्ये-
त्यादीन्द्राद्यनन्तादि०

## अध्यायः १४

१५

| मन्त्रः | विषयः |
|---|---|
| १-४ | ध्रुवक्षितिरित्यादि० |
| ५ | विष्टम्भनादि० |
| ६ | आप ओषधयः कल्पन्ताम् इत्यादि० |
| ७ | सजूरित्यादि० |
| ८ | प्राणं मे पाहीत्यादि० |
| ९-११ | विशालं[5] छन्द इत्यादि पदार्थविद्या |

२० १. यत्र यत्राग्रे ०विन्दुनिर्देशस्तत्र सर्वत्र 'पदार्थविद्या' इति शेषो ज्ञेयः।

२. आदिपदेन प्राणादि-दूर्वा-अग्नि-बृहस्पतीनां ग्रहणं ज्ञेयम्।

३. इतः पूर्वं हस्तलेखे 'येनाग्निनेत्यादि०' इति पाठ उपलभ्यते। नहीह निर्दिष्टः प्रतीकमन्त्रोऽस्मिन्नध्याये क्वचिदुपलभ्यते।

४. हस्तलेखे 'पुरोभुवस्तस्याग्नेरित्यादि' इत्यपपाठः।

२५ ५. वैयमुद्रिते '१० विराट् छन्द' इति परिवर्तितोऽपपाठः। अस्मत्पाठो हस्तलेखानुसारी वर्तते।

१२ विश्वकर्मा त्वेत्यादि०
१३-१४ राज्ञ्यसि प्राची दिगित्यादि०
१५-१६ नभश्च नभस्यश्च वार्षिकावृतू इत्यादि ऋतुविद्यादि०
[ १७ आयुर्मे इत्यादि-प्रार्थनादि० ]
१८-१९ माच्छन्दः प्रमाच्छन्दः प्रतिमाच्छन्द इत्यादि०
२०-२३ अग्निर्देवतेत्यादि०
२४-२५ धातुराधिपत्यमित्यादि०
२६ त्रयस्त्रिꣳशस्तोम इत्यादि० ५
२७-३१ ऋतुव्याख्याने[1] सर्वसृष्टिप्रकरणेत्यादि[2]०

---

## अध्यायः १५

मन्त्रः विषयः

१-३ अग्ने जातान् प्रणुदा न इत्यादि०
४-५ एवश्छन्दो वरिवश्छन्द इत्यादि०
६-९ रश्मिना सत्याय सत्यं जिन्वेत्यादि-[3]धर्मोपदेशादि०
१० राज्ञ्यसि प्राची दिग्वसवस्ते देवा इत्यादि०
११-२७ अन्तरिक्ष इत्यादि०
२८-३७[4] त्वामग्नेऽ अङ्गिरसो गुहा हितमित्याद्यग्नीश्वरस्तुत्यादि-पदार्थ-विद्या १०
३८-४८ भद्रो नोऽअग्निराहुतो भद्रा रातिः सुभग भद्रोऽअध्वरः। भद्रा ऽ उत प्रशस्तय इत्यादीश्वर-प्रार्थनादि० १५
४९ येन ऋषयस्तपसा सत्रमायन्नित्यादि-धर्मोपदेशादि-विद्या

---

१. वैयमुद्रिते 'ऋतु-व्याख्यादि' इत्यपपाठः। २०

२.हस्तलेख इतोऽग्रे उत्तराध्यायस्य २८तममन्त्रादारभ्य ५१-५३ मन्त्रान्तो विषय इहान्तेऽस्थाने निर्दिष्ट उपलभ्यते।

३. वैयमुद्रिते 'धर्मोपदेशादि०' इति पाठः प्रमादान्नष्टः, हस्तलेखे वर्तते।

४. '२८-३७ त्वामग्ने' इत्यारभ्य 'गृहस्थाश्रमोपदेशादि-पदार्थविद्या' इत्यन्तः पाठो हस्तलेखे पूर्वाध्यायान्तेऽस्थाने दृश्यते। २५

५०-५३ तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैरित्यादि-गृहस्थाश्रमोपदेशादि-पदार्थ-
५ विद्या

५४-५६ उद् बुध्यस्वाग्ने इत्यादि-यज्ञादि-पदार्थ-विद्या

५७ शिशिरान्त-षड्तु-विद्या

६५ सहस्रस्य प्रमासी[त्या]द्यग्नीश्वर-स्तुत्यादि०

---

## अध्यायः १६

मन्त्रः विषयः

१-१२ नमस्ते रुद्र मन्यवे इत्यादि-रुद्रेश्वरस्तुत्यादि-विद्या

१० १३-१६ अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे इत्यादि-धनुर्वेदादि-विद्या

१७-२३ नमो हिरण्यबाहवे इत्यादीश्वरस्तुतिप्रार्थनादि-विद्या

२४-४८ नमः सभाभ्यः सभापतिभ्यश्च वो नम इत्यादि-सभासभा[प]ति-[आदि-] विद्या

४९-५६ या ते रुद्र शिवा तनूरित्यादोश्वरस्तुत्यादि-विद्या

---

१५

## अध्यायः १७

मन्त्रः विषयः

१ अश्मन्नूर्जमित्यादि-पदार्थ-विद्या

२-१४ गणितादि-विद्या

२० १५-१६ प्राणदाऽ[1]अपानदेत्यादीश्वरस्तुति-प्रार्थनादि-पदार्थ-विद्या

१७-२५ यऽ इमा विश्वा भुवनानीत्यादीश्वरस्तुत्यादि-विद्या

२६-३२ विश्वकर्मा विमना आद्विहाया धाता विधातेत्यादि विश्वकर्मेश्वर-विद्या

[३३-४८ युद्ध-युद्धोपकरण-विद्या

४९-५८ अग्न्यादि-पदार्थ-विद्या]

५९ विमानऽ एष दिवो मध्यऽआस्त इत्यादि-विमान-विद्या

---

२५ १. गैयमुद्रिते 'अपानदाव्यानदे०' इति पाठः, हस्तलेखे 'व्यानदा' पदं नास्ति।

[६०-८१ अग्नि-इन्द्र-नक्तोषासा-सवित्रादि-पदार्थ-विद्या]

८२ ऋतश्चेत्यादीश्वर-धर्मोपदेशादि-विद्या

[८३-९९ अनेका विद्याः]

---

## अध्यायः १८

| मन्त्रः | विषयः |
|---|---|
| १ | वाजश्च मे इतीश्वरार्थं सर्ववस्तूनां समर्पणमित्यादि-पदार्थ-विद्या |
| २९ | आयुर्यज्ञेन कल्पतामित्यादीश्वरप्रार्थना |
| ३४ | वाजान्नादि-गुण-विद्या |
| ३७ | यन्त्रेणाग्नेरित्यादि-यन्त्र-रचना-'साम्राज्याभिषेकादि-विद्या |
| ४८ | रुचन्नो धेहीत्यादि-प्रार्थनादि-पदार्थ-विद्या |

५ १०

---

## अध्यायः १९

| मन्त्रः | विषयः |
|---|---|
| १ | स्वाद्वीन्त्वेति सोमगुण-लक्षण-सम्पादनादि-पदार्थ-विद्या |
| ९ | तेजोऽसि तेजो मयि धेहीत्यादि-स्तुति-प्रार्थनादि-पदार्थ-विद्या |
| ३३ | यस्ते रसः सम्भृत ऽओषधीषु सोमस्य शुष्मः सुरया सुतस्येत्यादि-सोम-संपादनादि-पदार्थ-विद्या |
| ३९ | पुनन्तु मा देवजना इत्यादीश्वरप्रार्थनादि०[२] |
| ४८ | आत्मसनि[मि]त्याद्यग्नीश्वर-प्रार्थनादि० |
| ४९ | उदीरतेत्यादि-पितृ-विद्या |
| ७४ | ऋतेन सत्यमिन्द्रियमित्यादि-सोमपानादि-विद्या |
| ७६ | रेतो मूत्रं विजहाति योनिं |

१५ २०

---

१. वैयमुद्रिते 'साम्राज्याभिषेकादि' पाठो नष्टः, हस्तलेखे दृश्यते। साम्राज्येनाभिषिञ्चामि' इति मन्त्रे श्रूयते।

२. इतोऽग्रे प्रतीकमन्त्रसंख्या प्रधानविषयकमन्त्रसंख्या वा निर्देक्ष्यते।

प्रविशदिन्द्रियम् इत्यादि-गर्भाधानादि-विद्या
७७ अश्रद्धामनृतेऽदधाच्छ्रद्धा ँ सत्ये प्रजापतिरित्यादि०
८० सीसेन तन्त्रं मनसा मनीषिण इत्यादि-शिल्प-विद्या
८५ इन्द्रः सुत्रामा हृदयेन सत्यमित्यादि-शरीरोत्पत्त्यादि-वैद्यक-शास्त्रोपदेशादि-शारी[1]रक-विद्या
९३ इन्द्रस्य रूपं शतमानमायुरित्यादि-पदार्थ-विद्या

## अध्यायः २०

| मन्त्रः | विषयः |
|---|---|
| १ | क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीत्यादि-सम्राड्-विद्योपदेशादि-विद्या |
| ३ | अन्नाद्यायाभि षिञ्चामीत्यादि-राज्याभिषेकादि-विद्या |
| ४ | कोसि कतमोसि कस्मै त्वा काय त्वा। सुश्लोक सुमङ्गल सत्यराजन्[2]। |
| ५ | शिरो मे श्रीरित्यादि-प्रार्थना, राजा मे प्राणो ऽ अमृतᳫं सम्राडित्यादि-प्रार्थना |
| १२ | [प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्] तृतीयाः सत्येन सत्यं यज्ञेनेत्यादि धर्मोपदेशः |
| १९ | सुमित्रिया न [ऽआप ऽ] ओष[ध]यः इत्यादि [भैषज्य-] पदार्थ-विद्या |
| २३ | [3]वैश्वानरज्योतिर्भूयासमित्यादि० |
| २४ | व्रतं च श्रद्धां चोपैमीत्यादि० |
| ३६ | त्रिभिर्देवै[स्त्रिᳫंशता वज्रबाहु]र्जघान वृत्रमित्यादि-मेघ-विद्या |
| (?) | [4]इन्द्रेत्यादि-पदार्थ-विद्या |
| ५० | त्रातारमिन्द्रमवितारमिन्द्रमित्यादि-स्तुति-प्रार्थना० |
| ५५ | सरस्वतीत्यादि० |
| ८५ | चेतन्ती सुमतीनामित्यादि० |

१. वैयमुद्रिते 'शारीरिक' इति भ्रष्टः पाठः।

२. उत्तरेण सम्बन्धादिहापि 'प्रार्थना' विषयो ज्ञेयः।

३. हस्तलेखे 'वैश्वानरो भूयासम्' इत्यपपाठः।

४. प्रतीकनिर्देशेऽपसन्धिनिर्देशान्न ज्ञायते यदत्र ३६-५० चतुर्दशमन्त्रेषु कतमस्य प्रतीकनिर्देशः। एषु इन्द्रः इन्द्रम् इन्द्रस्य पदानि श्रूयन्ते।

## अध्यायः २१

| मन्त्रः | विषयः |
| --- | --- |
| १ | इमं मे वरुण श्रुधी हवमित्यादि[1]० |
| ६ | अदितिं सुप्रणीतिमित्यादि० |
| ११ | वाजेवाजे इत्यादि० |
| २२ | यज्ञं वरुण इत्यादि० |
| २३ | वसन्तेन ऽ ऋतुनेत्य[ा]दि०[2] |
| ३० | पथा मधुमता······ -- होतर्यजेत्यादि० |
| ३४ | दुहे धेनुः[3] सरस्वतीत्यादि० |
| ३८ | भिषग् यशः सुरया [इत्यादि०] |
| ३९ | राजानं व्याघ्रमित्यादि० |
| ४० | भेषजं पय इत्यादि० |
| ४४ | पुरा द्वेषोभ्य इत्यादि० |
| ४६ | प्रिया धामानि यत्रेत्यादि० |
| ५८ | देवो ऽ अग्निः स्विष्टकृदितीश्वरादि-पदार्थ-विद्या |
| ५९ | अग्निमद्य होतारमवृणीतायं यजमान इत्यादि० |
| ६१ | त्वामद्य ऽ ऋष ऽ आर्षेय इत्यादि० |

## अध्यायः २२

| मन्त्रः | विषयः |
| --- | --- |
| १ | तेजोऽसि शुक्रममृतमायुष्पा ऽ आयुर्मे पाहीत्यादीश्वरस्तुति-प्रार्थनादि० |
| ६ | अग्नये स्वाहेत्यादि० |
| ९ | तत्सवितुरित्यादीश्वर-स्तुति-प्रार्थनोपासनादि-विद्या |
| १९ | विभूर्मात्रा प्रभूः पित्राश्वोसीत्यादि०, ययुर्नामासि शिशुर्नामासीत्यादि० |
| २० | काय स्वाहा कस्मै स्वाहेत्यादि० |
| २२ | आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसीत्यादि० |
| २३ | प्राणाय स्वाहेत्यादि० |
| ३३ | आयुर्यज्ञेन कल्पताँ स्वाहेत्यादीश्वरप्रार्थनादि-विद्या |

१. स्तुति प्रार्थना-पदार्थविद्या। २. ऋतुविद्या।

३. हस्तलेखे 'धेनु' इत्यपपाठः। 'सरस्वतीमित्यादि' इति वैयमुद्रितेऽपपाठः।

## अध्यायः २३

मन्त्रः विषयः

१ हिरण्यगर्भः समवर्तताग्र इत्यादि०

४ यस्ते रात्रौ संवत्सरे महिमा सम्बभूवेत्यादि०

८ वसवस्त्वाञ्जन्त्वित्यादि-अञ्जनादि-विद्या

९ कः स्विदेकाकी चरतीत्यादि-प्रश्नोत्तरविद्या

१७ अग्निः पशुरासीत्तेनायजन्तेत्यादि०, वायुः पशुरासीत्तेनायजन्तेत्यादि०, सूर्यः पशुरासीत्तेनायजन्तेत्यादि०

२२ यकासकौ शकुन्तिका [इत्यादि] विड् वै[1] शकुन्तिका विड् वै गभो राष्ट्रं पसः राष्ट्रप्रजादि-विद्या

२४-३१ माता च ते पिता च त इत्यादि०, [2]राष्ट्रं मुष्टिरित्यादि० जारनिषेधादि०

३९ देवानां पत्न्यो दिश इत्यादि०

४० ऋतवस्त ऽ ऋतुथा पर्व शमितार इत्यादि०

४४ शमित्यादि०

४७ किँस्वित् [सूर्य]समं ज्योतिरित्यादि०

४९ येषु विष्णुस्त्रिषु पदेष्वेष्ट इत्यादि कार्य-कारण-विद्या

५१ केष्वन्तः पुरुष ऽआ [3]विवेशेत्यादि-प्रश्नविद्या

५२ पञ्चस्वन्तः पुरुष ऽ आविवेशेत्याद्युत्तरविद्या[4]

५३ का स्विदासीत् पूर्वचित्तिरित्यादि-प्रश्नोत्तरादि-पदार्थ-विद्या

५८ अशीतिर्होमा इत्यादि-पदार्थ-विद्या

---

१. विड् वै० इत्यादिपाठोऽस्य मन्त्रस्य व्याख्याने शतपथे (१३।२।९।६) वर्तते ।

२. 'राष्ट्रं मुष्टिः' पाठोऽप्यस्य मन्त्रस्य व्याख्याने शतपथे (१३।२।९।७) द्रष्टव्यः ।

३. वैयमुद्रिते 'विवेशेत्यादीश्वराद्युत्तरविद्या' इत्यपपाठः । आत्मत्पाठो हस्तलेखानुसारी वर्तते ।

४. वैयमुद्रितेऽयं पाठो नष्टः, हस्तलेखे दृश्यते ।

## अध्यायः २४

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | अश्वस्तूपर इत्यादि० पदार्थविद्या | ६-४० | यज्ञसामग्री-विद्या |
| ५ | शिल्पा वैश्वदेव्य इत्यादि- | | |

## अध्यायः २५

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | शादं[1] दद्भिरवकां 'दन्तमूलै-रित्यादि-पदार्थविद्या | १९ | स्वस्ति न ऽइन्द्रो वृद्धश्रवा इत्यादीश्वर-प्रार्थनादि-विद्या |
| ११ | यः प्राणतो निमिषतो महित्वैक इत्यादीश्वरविद्या | २६ | एष छाग इत्यादि० |
| १४ | आ नो भद्रा इत्यादि० | २७ | देवयानमित्यादि० |
| १५ | देवानां भद्रा सुमतिर्ऋजूयता-मित्यादीश्वर-प्रार्थना | ३५ | भिक्षामुपासते इत्यादि० |
| १६ | तान् पूर्वया निविदा हूमहे वयमित्यादीश्वर-स्तुत्युपासनादि-विद्या | ४३ | प्रिय ऽ आत्मा [इत्यादि-] पदार्थविद्या |

## अध्यायः २६

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | अग्निश्च पृथिवी चेत्यादि० | १० | महाँ२ऽ इन्द्रो वज्रहस्त इत्यादि-दुष्टनाशार्थ-प्रार्थनादि-विद्या |
| २ | यथेमां वाचं कल्याणी-मित्यादि-वेदपठनार्थमधिकारः सर्वेषां मनुष्याणाम् | १४ | ऋतवस्ते यज्ञं वि तन्वन्तु मासा रक्षन्तु ते हविरित्यादि-स्तुतिप्रार्थनादि० |
| ९ | अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहित[2] इत्यादि० | | |

१. वैयमुद्रिते हस्तलेखे च 'दन्तमूलादि' इत्यपपाठः ।

२. वैयमुद्रिते 'पुरोहितम्' इत्यपपाठः ।

## अध्यायः २७

मन्त्रः विषयः

१ समास्त्वाग्न इत्यादि०

८ [1]वर्धयैन [महते] सौभागाये-त्यादि-पदार्थ-विद्या

२६ यो देवेष्वधि देव ऽ एक ऽ आसीदित्यादि०

३२ वायो ये ते सहस्रिणो रथासस्तेभिरा गहीत्यादि०

४५ उषसस्ते कल्पन्तामित्यादि०

---

## अध्यायः २८

मन्त्रः विषयः

१ होता यक्षत्समिधेन्द्रमित्यादि०

२-४६ होतर्यजेत्यादि०

---

## अध्यायः २९

मन्त्रः विषयः

१ समिद्धोऽअञ्जन्नित्यादि०

३ ईडयश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च [2]सप्त इत्याद्यग्नीश्वर-स्तुत्यादि०

६ सुहिरण्ये सुशिल्पे ऽ ऋतस्य योनाविह सादयामीत्यादि०

९ त्वष्टेदं विश्वं भुवनं जजाने-त्यादीश्वरादि-विद्या

३९ धन्वना गा धन्वनाजि जये-मेत्यादि०

४७ ब्राह्मणासः पितर[3] इत्यादि-पदार्थविद्या

५८ आग्नेयः कृष्णग्रीव इत्यादि०

---

१. वैयमुद्रिते सम्पादकेन मूलपाठं परिवर्त्य '२ बोधयैनं……सौभगाये-त्यादि' पाठो मुद्रितः। हस्तलेखस्य पाठोऽष्टमे मन्त्रे तेन कथ नोपलब्ध इति न विद्मः।

२. वैयमुद्रिते 'सप्तेत्यग्नीश्वर०' इत्यपपाठः।

३ इत उत्तर हस्तलेखे 'इतर' पदमधिकं दृश्यते। मन्त्रे नास्ति।

## अध्यायः ३०

| मन्त्रः | विषयः | मन्त्रः | विषयः | |
|---|---|---|---|---|
| १ | देव सवित इत्यादि-पदार्थ-विद्या | | [1]राजन्यमित्याद्यासुवोत्पादयेतीश्वरप्रार्थना | |
| [२-४ | ईश्वर-प्रार्थनादि-विद्या] | ६ | धर्माय [2]सभाचरमित्यादि० | ५ |
| ५ | ब्रह्मणे ब्राह्मणं क्षत्राय | ११ | [3]आध्यक्ष्यायानुक्षत्तारमित्यादि० | |

---

## अध्यायः ३१

| मन्त्रः | विषयः | |
|---|---|---|
| १-२२ | सहस्रशीर्षेत्यादीश्वर-स्तुति-जगदुत्पत्त्यादि-पदार्थ-विद्या | १० |

---

## अध्यायः ३२

| मन्त्रः | विषयः | मन्त्रः | विषयः | |
|---|---|---|---|---|
| १ | तदेवाग्निस्तदादित्यस्तद् वायुरित्यादि-परमेश्वरस्यानेकनामानि | ३ | न तस्य प्रतिमाऽस्तीत्यादीश्वरे प्रतिमानिषेधः, ब्रह्मविद्या-विधानादि-पदार्थविद्या | १५ |

---

१. हस्तलेखे 'राजन्यमित्याद्याशुवोत्पादयती०' इत्यपपाठः । वैयमुद्रिते मूलपाठं परिवर्त्य 'राजन्यमित्यादि-विद्या' इत्येवं पाठो मुद्रितः ।

२. वैयमुद्रिते 'सभाचरन्नि०' इत्यपपाठः ।

३. वैयमुद्रिते 'धर्माध्यक्ष्याय' इत्यपपाठः ।

## अध्यायः ३३



५

१०

## अध्यायः ३४



१५

२०

१. संहितायां 'भगः' इति पाठः ।

## अध्यायः ३५

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | अपेतो यन्त्वित्यादि० | १३ | अनड्वाहमग्निरि[1]त्यादि० |
| ५ | सविता ते शरीराणि मातुरुपस्थ ऽ आ [व]पतु [इत्याद्य]नेक-जन्मविद्या | १९ | यमराज्यमित्याद्यन्त्येष्टि-विद्या |

५

## अध्यायः ३६

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | ऋचं वाचं प्र पद्ये मन इत्यादि० | | इत्यादि० |
| ९ | शन्न इत्यादि० | १८ | मित्रस्य चक्षुषेत्यादि० |
| १४ | आपो हि ष्ठा मयोभुव | २४ | तच्चक्षुरित्यादि० |

१०

## अध्यायः ३७

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | देवस्य त्वा सवितुः [इत्यादि]० | ११ | अर्चिरसि इत्यादि० |
| २ | युञ्जते मन ऽ उतेत्यादि-योग-विद्या | १३ | मधु मधु मधु इत्यादि० |
| ८ | मखस्य शिरोऽसि इत्यादीश्वर-यज्ञ-विद्या | १७ | भुवनेष्वन्तः इत्यादि० |
| | | १८ | विश्वासां भुवां पते इत्यादि० |
| | | २० | पिता नोऽसीत्यादि० |

१५

## अध्यायः ३८

| मन्त्रः | विषयः | मन्त्रः | विषयः |
|---|---|---|---|
| १ | देवस्य त्वा सवितुः [इत्यादि]० | २ | इड ऽ एहीत्यादि० |
| | | ६ | गायत्रं छन्दोऽसीत्यादि० |

२०

१. संहितायाम् 'अनड्वाहमन्वारभामहे' पाठो वर्तते।

७ समुद्राय त्वा वाताय स्वाहेत्यादि
१४ इषे पिन्व[स्व] इत्यादि, धर्मासि सुधर्मामेन्यस्मे नृम्णानि [धारय] ब्रह्म धारय क्षत्र धारयेत्यादि०
२१ वर्धस्वेत्यादि-पदार्थ-विद्या
२५ एधोऽसीत्यादि-पदार्थ-विद्या

---

५ अध्यायः ३९

| मन्त्रः | विषयः |
|---|---|
| १ | प्राणाय स्वाहा[1]ऽसाधिपतिकेभ्य इत्याद्यन्त्येष्टि-विद्या |
| ६ | सविता प्रथमेऽहन् इत्यादि० |
| १० | लोमभ्यः स्वाहा इत्यादि० |

---

अध्यायः ४०

१०

| मन्त्रः | विषयः |
|---|---|
| १-१७ | ईशावास्यम् इत्यादि-ब्रह्मविद्या |

इति यजुर्वेदस्य विषय-सूची समाप्ता ॥

समाप्ता चतुर्वेद-विषय-सूची

---



---

१. संहितायां 'स्वाहा प्राणेभ्यः' इति पाठः ।